अनन्तरं केवले द्रष्टरि प्रतिष्ठामभ्यसेत् ॥ ८॥

कथं पश्यामीति तत्र प्रथमो विचारः ॥ ९॥

कः पश्यतीति द्वितीयः ॥ १०॥

एवमहं पश्यामीति निष्ठा ॥ ११॥

अज्ञानिनो दर्शने विषयस्य प्राधान्यम् ॥ १२॥

द्रष्टा दर्शनं चाध्याह्रियेते तत्र प्रमितेर्वाक्यत्वे ॥ १३॥

योगिनो दर्शने द्रष्टुः प्राधान्यम् ॥ १४॥

विषयो दर्शनं चाध्याह्रियेते तत्र प्रमितेर्वाक्यत्वे ॥ १५॥

दृष्टौ वा प्रतितिष्ठेत् ॥ १६॥

तदा दर्शने स्वस्य प्राधान्यम् ॥ १७॥

विषयो द्रष्टा चाध्याह्रियेते तत्र प्रमितेर्वाक्यत्वे ॥ १८॥

द्रष्टरि दृष्टौ वा प्रतिष्ठितः कण्ठायावतरेत् ॥ १९॥

अथ हृदयायेत्यपरः प्रकारस्तपसः ॥ २०॥

तत्र क्षेत्रज्ञे तच्चितिशक्तौ वा प्रतिष्ठां विन्देत् ॥ २१॥

तन्माहाभाग्यं प्राग्वत् ॥ २२॥

**सप्तमः खण्डः**

केवलो विचारोऽन्यः पन्थाः ॥ १॥

अहंस्फूर्त्यन्वेषणविधया ॥ २॥

अहंस्फूर्तौ प्रत्यग्गत्याऽवतरणेन वा ॥ ३॥

विचारयन्ननारतं तज्जेनोष्मणा हृदयस्य नाडीबन्धं शिथिलयेत् ॥ ४॥

तत्त्वज्ञानेनाभिमानबन्धम् ॥ ५॥

अत्र च निष्ठा माहाभाग्ये प्राग्वन्निष्ठामाहाभाग्ये प्राग्वत् ॥ ६॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनो-
र्गणपतेः कृतिः राजयोगसारसूत्रं समाप्तम् ॥



Kavyakantha Ganapati Muni

# इन्द्रेश्वराभेदसूत्रम्

इन्द्रः शिवश्च न द्वौ ॥ १॥

इन्द्राणीरुद्राणी च न द्वे भवतः ॥ २॥

इन्द्रेश्वरयोरेकार्थत्वादिन्द्रेश्वराभेदः ॥ ३॥

पुरांभिन्दुरिन्द्रः पुरभिदीश्वरो हि ॥ ४॥

देवराज इन्द्रो महादेव ईश्वरो हि ॥ ५॥

महेन्द्रमहेश्वरशब्दावपि हि तुल्यार्थौ ॥ ६॥

रुद्रसङ्क्रन्दनशब्दौ च ॥ ७॥

उग्रशब्दो ह्युभयत्र प्रयुज्यते ॥ ८॥

ईशान शब्दश्च ॥ ९॥

भीम शब्दश्च ॥ १०॥

उभयोरप्यधिभूतं वैद्युततेजोरूपत्वात् ॥ ११॥

मरुदीश एको भूतेशोऽपरो हि ॥ १२ ॥

भूताश्च रुद्राः ॥ १३ ॥

रुद्राश्च मरुद्भ्यो नातिरिच्यन्ते ॥ १४ ॥

उभावपि दुष्टसंहाराय हि प्रेर्येते ॥ १५ ॥

उभयोरप्यपारः पराक्रमो वर्ण्यते हि ॥ १६ ॥

मृत्युञ्जयत्वं च ॥ १७ ॥

शिववाहनभूतोवृषो वर्षकत्वव्युत्पत्तेरिन्द्रवाहनभूतान्मेघान्नातिरिच्यते ॥ १८ ॥

स वृष्ट्या सर्वानन्दकरत्वान्नन्दी ॥ १९ ॥

सेचकत्वादुक्षा ॥ २० ॥

जलात्मकत्वाद्गौः ॥ २१ ॥

अत एव बहिर्नील इव दृश्यमानोऽपि श्वेतो वर्ण्यते ॥ २२ ॥

आपा हि श्वेताः ॥ २३ ॥

एवं चेदिन्द्रेश्वरयोर्द्वैधाव्यवहारः कुत इति चेत् ॥ आक्षेपः ॥ २४ ॥

रुद्रो महान्प्राणः ॥ समाधानम् ॥ २५॥

सोऽधिदैवतमिन्द्रः ॥ २६॥

मध्यमस्याध्यात्मिकं नाम रुद्र इति ॥ २७॥

आधिदैविकं नामेश्वर इति ॥ २८॥

ततो रुद्राणी प्राणशक्तिरिन्द्राणी देवता स्त्रीरूपा चेत्युक्तं भवति ॥ २९॥

रुद्र इन्द्रस्य तत्त्वम् ॥ ३०॥

इन्द्रो रुद्रस्याभिमानी ॥ ३१॥

रुद्राणीन्द्राण्यास्तत्त्वम् ॥ ३२॥

इन्द्राणी रुद्राण्या अभिमानिनी ॥ ३३॥

रुद्राणी रुद्रश्च योगिभिरुपास्येते ॥ ३४॥

ते ह्यध्यात्मचिन्तकाः ॥ ३५॥

इन्द्रणीन्द्रश्च वैदिकैः स्वाध्यायेन संस्तूयेते ॥ ३६॥

ते ह्यधिदैवतपरास्ते ह्यधिदैवतपराः ॥ ३७॥

# चतुर्व्यूहसूत्रम्

**प्रथमः खण्डः**

अथात इन्द्रस्य चतुर्व्यूहं व्याख्यास्यामः ॥ १ ॥

यथा भगवतो बृहदुक्थस्यर्षेर्मन्त्रदर्शनानि ॥ २ ॥

यथा चान्येषां भगवतामृषीणाम् ॥ ३ ॥

आकाशकालसूर्यवैद्युताग्निभेदादिन्द्रश्चतुर्धा ॥ ४ ॥

आत्मैक्याद्विभागो नोपपद्यत इति चेद्विभूतितो विभागः ॥ ५ ॥

प्राधान्येनायं विभागस्तद्रूपाणां मायाकृतानामनन्तत्वात् ॥ ६ ॥

वैद्युताग्नेः स्थाने पर्जन्यमेके प्राहुः ॥ ७ ॥

तथा हि याज्ञवल्क्यस्य दर्शनं सङ्गच्छेत ॥ ८ ॥

पर्जन्यो वैद्युताग्नेर्नातिरिच्यते तस्मान्नेदं मतान्तरमिति वासिष्ठः ॥ ९ ॥

स्तनयित्नुनामलिङ्गात् ॥ १० ॥

मेघस्य प्रायो वृत्राद्यसुरनामभिरेव कथनाच्च न मेघेन्द्रयो-रनर्थान्तरत्वोपपत्तिः ॥११॥

स्तनयित्नुमेघयोर्भेदापत्तिरिति चेत्तदिष्टम् ॥१२॥

व्यवहारसङ्करस्तु भाक्तः ॥१३॥

अभेदो वाऽस्तु ॥१४॥

मेघस्य भेदेनासुरादिरूपेण च कथनं भाक्तम् ॥१५॥

मायेत्सा ते यानि युद्धान्याहुरिति निगमश्चात्र भवति ॥१६॥

वैद्युताग्निना मेघो भिद्यत इव दृश्यत इति तस्मिन्नसुरत्वमारोप्यते ॥१७॥

एतेनेन्द्रस्य गोत्रभित्त्वं च व्याख्यातम् ॥१८॥

तत्र गोत्रः पर्वतवाचीति चेन्मेघ एव वैदिकभाषायां पर्वत उच्यत इत्यविरोधः ॥१९॥

वैद्युताग्निना मेघ आरूढ इव दृश्यत इति तस्य तद्वाहनत्वं चारोप्यते ॥२०॥

अनयोरुभयोश्च पक्षयोर्मेघात्तेजोभागं पृथग्विधाय व्यवहारः॥२१॥

तत्र तेजोभागस्यैव प्राधान्येन ग्रहणे स इन्द्रादनर्थान्तरम् ॥२२॥

## द्वितीयः खण्डः

आकाशो द्विविधः शुद्धरजोमयभेदात् ॥१॥

शुद्धः परमात्मनो व्यापकचित्तेजसो नातिरिच्यते ॥२॥

रजोमयोऽणुपटलात्मकः ॥३॥

पन्थास्त्विषां देवानां च ॥४॥

पूर्व उत्तरस्मिन् परस्ताच्च ततः ॥५॥

स परमात्मनः शक्तिश्चेद्द्वैतापत्तिः ॥ आक्षेपः ॥६॥

परमात्मैव चेद्वेत्तृवित्तिविभागानुपपत्तिः ॥७॥

वस्तुतो वेत्तृवित्त्योरभेदादविरोधः ॥ समाधानम् ॥८॥

उभयोरपि ज्ञानरूपत्वात् ॥९॥

अन्तरस्य वेत्तृत्वं शाखानां वित्तित्वम् ॥१०॥

ईदृशं द्वैतं तु नानिष्टम् ॥११॥

रजोमयाकाशोपाधिवशाद्वित्तेः पुनरन्तराभिव्यक्तेः परमात्मनोऽन्यो वेत्ता निष्पद्यते ॥१२॥

स निरुपाधिक एष सोपाधिकः ॥ १३ ॥

स निर्गुण एष सगुणः ॥ १४ ॥

स विश्वतः परस्तादेष विश्वस्मिन् ॥ १५ ॥

स विश्वातीत एष विश्वाध्यक्षः ॥ १६ ॥

एष इन्द्रः प्राचां भाषायाम् ॥ १७ ॥

ईश्वरोऽर्वाचाम् ॥ १८ ॥

एतमेव हिरण्यगर्भो भगवानृषिरात्माभेदेन पश्यन् आह हिरण्यगर्भम् ॥ १९ ॥

कमनिर्वाच्यप्रभावत्वात् ॥ २० ॥

प्रजापतिं सर्वाध्यक्षत्वात् ॥ २१ ॥

प्राय एतद्दर्शनानुसारीणि बहूनि ब्राह्मणानि ॥ २२ ॥

इन्द्रप्रजापत्योर्भेदनिर्देशानुपपत्तिरिति चेत्तत्रेन्द्रशब्दो विभूत्यन्तरपर इत्यविरोधः ॥ २३ ॥

अयमेवेन्द्रो ब्रह्मा यथा पश्यति भगवानिरिम्बिठिः ॥ २४ ॥

यथा च भगवान् वामदेवः ॥ २५ ॥

यथा सम्बोधयति भगवान् वसिष्ठः ॥ २६॥

यथा च विशिनष्टि शंयुर्भगवान् ॥ २७॥

सोमेन्यत्र ब्रह्मपदमुपयुज्यत इति चेत्तद्भाक्तं प्रबलविधिविरोधात् ॥ २८॥

इन्द्रब्रह्मणोर्भेदनिर्देशानुपपत्तिरिति चेत्तत्रोक्तम् ॥ २९॥

ब्रह्मप्रजापत्योर्भेदनिर्देशानुपपत्तिरिति चेत्तत्र ब्रह्मशब्दः साक्षात् परमात्मपरो लिङ्गान्तरवान् ॥ ३०॥

येन भूतं जनयो येन भव्यमिति लिङ्गं च ब्रह्मेन्द्राभेदस्य गमकं भवति ॥ ३१॥

इममेवेन्द्रं भगवान्नारायणः सहस्रशीर्षं सहस्राक्षं सहस्रपादं पुरुषमाह ॥ ३२॥

मुखादिन्द्रश्चाग्निश्चेति वचनं विरुध्यत इति चेत्तत्त्रेन्द्रो वैद्युतोऽग्नि-सहपाठलिङ्गात् ॥ ३३॥

इममेवेन्द्रं विश्वकर्मा भगवानृषिरात्माभेदेन पश्यन् विश्वकर्माणमाह ॥ ३४॥
गुणाद्वा ॥ ३५॥

विश्वकर्मा विश्वदेवो महाँ असीति निगमान्तरं चात्र भवति॥ ३६॥

एवमिन्द्रस्य प्रथमा विभूतिर्व्याख्याता ॥ ३७॥

## तृतीयः खण्डः

चित्तेजसो महति पाके द्वयमाविर्भवति ॥ १॥

अव्यक्तः शब्द आद्यः ॥ २॥

गूढो वैद्युतोऽग्निरपरः ॥ ३॥

आद्यः प्रणवो नामान्तरेण ॥ ४॥

अक्षरं च ॥ ५॥

एतौ यावद्विश्वं व्यापकौ ॥ ६॥

चित्प्रणव वैद्युतानामविभाज्यः संश्लेषः ॥ ७॥

प्रणवान्नापरः कालः ॥ ८॥

स हि प्रभवन् भूतस्य भवतो भाविनश्च निष्पादयिता ॥ ९॥

रोदितीति रुद्रो नाम्ना ॥ १०॥

नित्यः संहर्ता भूतानां परिणामक्रियायास्तदधीनत्वात् ॥ ११॥

कर्ता चावान्तरसृष्टेः पूर्वपूर्वावस्थानाशस्योत्तरोत्तरावस्थापरिग्रह-पर्यवसानत्वात् ॥ १२॥

तस्मात्तं भुवनस्य पितरं पश्यति भगवानृजिश्वा ॥ १३॥

त्र्यम्बकं भगवान् वसिष्ठः ॥ १४॥

स मरुतां पिता ॥ १५॥

शब्दजन्मा हि माध्यमिको देवगणः ॥ १६॥

तच्छरीराणां शब्दप्रकृतिकत्वात् ॥ १७॥

द्रव्यमेवाकाशव्यापिशब्दो न गुणः ॥ १८॥

नादगुणवत्वाद्गतिक्रियावत्त्वाच्च ॥ १९॥

नादवृद्धिः परेति ब्रुवाणो जैमिनिरत्र भवति ॥ २०॥

प्राणा वा मरुतः ॥ २१॥

प्राणानां प्रणवः पिता स हि महान्प्राणः ॥ २२॥

रुद्रमातरिश्वनोरभेदापत्तिरिति चेत्तदिष्टम् ॥ २३॥

भेदेन व्यवहारस्तु मूलवायुतत्तरङ्गभेदात् ॥ २४॥

मूलवायुर्महान्प्राणः ॥ २५॥

तत्तरङ्गा इमे वायवः ॥ २६॥

इन्द्ररुद्रयोरभेदापत्तिरिति चेत्तदिष्टम् ॥ २७॥

भेदनिर्देश इन्द्रशब्दो विभूत्यन्तरपर इति न विरोधः ॥ २८॥

इन्द्रवाय्वोरभेदापत्तिरिति चेत्तदिष्टम् ॥ २९॥

भेदेन निर्देश इन्द्रशब्दो विभूत्यन्तरपर इति न विरोधः ॥ ३०॥

एतेनान्तरिक्षस्थानो वायुर्वेन्द्रोवेति वदन् यास्कः सङ्गच्छते॥ ३१॥

तत्र हि कल्पो नामोद्देशेन न देवतोद्देशेन ॥ ३२॥

इममेवेन्द्रं वेनो भगवानात्माऽभेदेन पश्यति वेनम् ॥ ३३॥

तदिद्रुद्रस्य चेतति यह्वं प्रत्नेषु धामस्वित्यस्यैव भगवान्नारदीयास्तुतिर्भवति ॥ ३४॥

यह्वं चात्र महत्त्वम् ॥ ३५॥

अयमेवेन्द्रः सङ्क्रन्दन उच्यते ॥ ३६॥

इन्द्रः सङ्क्रन्दन इत्येकार्थौ ॥ ३७॥

अयमेवेन्द्रो रुद्रे रूढेनेशानपदेनोच्यते मन्त्रेषु ॥ ३८॥

उग्रपदेन च ॥ ३९॥

अयमेवेन्द्रः पुरन्दर उच्यते ॥ ४०॥

रुद्रो हि पुरभित् ॥ ४१॥

पुरापरपर्यायाणि शरीराणि भित्त्वा प्राणः प्रविशतीत्यर्थसङ्गतिः ॥ ४२॥

निर्गच्छतीति वा ॥ ४३॥

विधुन्दद्राणं समने बहूनां युवानं सन्तं पलितो जगारेति स्तुतिरस्यैव भवति ॥ ४४॥

इतीन्द्रस्य द्वितीया विभूतिर्व्याख्याता ॥ ४५॥

**चतुर्थः खण्डः**

सूर्य इन्द्रस्य तृतीया विभूतिः ॥ १॥

यथा सम्बोधयति द्विवारं सुकक्षो भगवान् ॥ २॥

यथा च बहूनामृषीणां वर्णनानि ॥ ३॥

इन्द्रसूर्ययोरभेदापत्तिरिति चेत्तदिष्टम् ॥ ४॥

भेदेन निर्देश इन्द्रशब्दो विभूत्यन्तरपर इति न विरोधः ॥ ५॥

एतस्यैवारोदसी आपृणादिति स्तुतिः ॥ ६ ॥

**पञ्चमः खण्डः**

वैद्युताग्निरिन्द्रस्योत्तरा विभूतिः ॥ १॥

अत्रैव सर्वेषां पुराणानां गतिः ॥ २॥

अयमेवेन्द्रो युद्धस्य देवता वर्ण्यते ॥ ३॥

तथा दस्युहा ॥ ४॥

अस्यैव वज्रित्वम् ॥ ५॥

अयमेवेन्द्रो मरुतां पतिः ॥ ६॥

अस्याः प्रथमस्याश्च विभूत्योर्दाशतयीष्वैन्द्रेषु भूयो वर्णनं दृश्यते ॥ ७॥

इतरयोर्नामान्तरेण प्रायः ॥ ८॥

एवमिन्द्रस्य विभूतिचतुष्कं स्वरूपतो व्याख्यातम् ॥ ९॥

**षष्ठः खण्डः**

प्रथमस्या विभूतेः पृथग्व्यक्तित्वं व्याख्यातम् ॥ १॥

उपाधिश्च व्याख्यातः ॥ २॥

अन्यास्तिस्रो विभूतयः स्वयमुपाधिस्थानीयाः ॥ ३॥

पृथक् पृथक् तत्र चिदंशस्यानुप्रविष्टत्वात् पृथक् पृथक् व्यक्तित्वं तासाम् ॥ ४॥

वैद्युताग्नेः कश्चिद्विशेषः ॥ ५॥

स गोलप्रान्तेष्वेव बलवानुपाधिर्भवति स्वपितीव महाकाशमध्ये ॥ ६॥

तस्माद्यावद्गोलं तुरीयविभूतिनिष्पन्नव्यक्तिसङ्ख्या ॥ ७॥

यावद् ब्रह्माण्डं तृतीयविभूतिनिष्पन्नव्यक्तिसङ्ख्या ॥ ८॥

रविकुटुम्बानां हि ब्रह्माण्डसंज्ञा ॥ ९॥

एकैव व्यक्तिद्वितीयोपाधेरेकत्वात् ॥ १०॥

द्वितीयस्या एकत्वेन प्रथमस्या एकत्वं व्याख्यातम् ॥ ११॥

तृतीयतुरीये च व्यक्ती अस्माकं दृष्टचैकैकश एव गोलान्तरवैद्युताना-

मण्डान्तररवीणां चास्माभिः सहासम्बद्धत्वात् ॥ १२ ॥

सर्वोपाधिषु विशालेष्वपि यत्र यत्रान्तरं सम्पद्यते तत्र तत्र पुनर्दिव्यशरीरप्रादुर्भावः ॥ १३ ॥

तस्मादिन्द्रस्य व्यक्तीनां द्विविधे शरीरे भवतः ॥ १४ ॥

एकं महत्प्रत्येकं यथा व्याख्यातम् ॥ १५ ॥

अन्यद्दिव्यपुरुषविधम् ॥ १६ ॥

प्रथमद्वितीययोरेकैकव्यक्तित्वेन तत्सम्बद्धदिव्यपुरुषयोरेकैकत्वं व्याख्यातम् ॥ १७ ॥

उत्तरयोर्बहुत्वेन तत्सम्बद्धदिव्यपुरुषाणां च बहुत्वम् ॥ १८ ॥

## सप्तमः खण्डः

पाञ्चरात्राणां भाषायामाद्या विभूतिर्वासुदेवः ॥ १ ॥

द्वितीया सङ्कर्षणः ॥ २ ॥

तृतीया प्रद्युम्नः ॥ ३ ॥

6 तुरीयाऽनिरुद्धः ॥ ४ ॥

शैवानां भाषायां प्रथमा परमशिवः ॥५॥

द्वितीया भैरवः ॥६॥

तृतीया स्कन्दः ॥७॥

तुरीया गणपतिः ॥८॥

पार्थिवोऽग्निः स्कन्द इति कपाली भारद्वाजः ॥९॥

पार्थिवस्याग्नेः सूर्यानुविभूतित्वादुभयोर्मतयोरविरोध इति वासिष्ठः ॥१०॥

लिङ्गानामुभयथा दर्शनात् ॥११॥

एतासामेव विभूतीनां स्त्रीत्वं भणन्ति शाक्ताः ॥१२॥

तेषामाद्या विभूतिर्दुर्गा ॥१३॥

यां महेश्वरीं भणत्यरविन्दमुनिः ॥१४॥

अन्त्याः क्रमात् महाकाली महालक्ष्मी महासरस्वत्यः ॥१५॥

तिस्र एवोक्तास्तन्त्र इति चेन्न मेधासीति श्लोके चतसृणां स्तवात् ॥१६॥

स्त्रीत्वे पुरुषत्वे वा वैभूतिकदेहेष्वविप्रतिपत्तिः ॥१७॥

पुरुषविधेषु विप्रतिपत्तिरुभयलिङ्गत्वस्य तेषु दुर्लभत्वात् ॥ १८ ॥

पुरुषत्वमेव वस्तुतस्तेषां तद्भोग्यासु तल्लोकनारीषु तद्वन्महिमा तस्मात्ताश्चाधिदेवताः कीर्त्यन्त इति वासिष्ठः ॥ १९ ॥

दम्पत्योस्तत्र तत्रैकैशयत्वान्नसङ्घर्षणम् ॥ २० ॥

वैभूतिकशरीराभिमानित्वं पुरुषाणां वस्तुतः सम्बन्धान्नारीणां तद्द्वारा धियः सम्बन्धादित्युक्तं भवति ॥ २१ ॥

नारी हि सा स्वं पुरुषमात्माऽभेदेन पश्यति ॥ २२ ॥

वैभूतिकशरीराणामुभाभ्यां लिङ्गाभ्यां च व्यपदेशोऽप्रतिषिद्धः ॥ २३ ॥

अत एवादितिं विश्वरूपां पश्यन् भगवान् गोतमः सङ्गच्छते ॥ २४ ॥

आम्भृणी च स्त्रियं पश्यन्ती विश्वाध्यक्षां विश्वाध्यक्षाम् ॥ २५ ॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनो-
र्गणपतेः कृतिः चतुर्व्यूहसूत्रं समाप्तम् ॥

# रुद्रकुटुम्बसूत्रम्

ज्योतिरिदमासीदवैकृतं व्यापकं चिद्रूपम् ॥ १॥

तस्य सदिति ब्रह्मेत्यात्मेत्यन्यानि नामानि भवन्ति ॥ २॥

तस्येयं प्रथमेक्षा यदात्मानं व्याप्तं प्राजानात् ॥ ३॥

सा द्यौः समपद्यत ॥ ४॥

अनन्तराणां विज्ञानानां भित्तिः ॥ ५॥

इमामेवानन्तं देशमाहुः ॥ ६॥

अदितिरखण्ड्यत्वात् ॥ ७॥

अथ ज्योतिर्दिवमभ्यतपत् ॥ ८॥

अव्यक्तशब्दरूपता तदा तस्य ॥ ९॥

अव्यक्तशब्द एव प्रणवो नामान्तरेण ॥ १०॥

स दिवमभितपन् पुमानासीत् ॥ ११॥

सर्गाय क्रियावत्त्वमत्र पुंस्त्वम् ॥ १२॥

सर्गाय क्रिया च तपः ॥ १३॥

स पुमान् रुद्रो नाम ॥ १४॥

अभितप्यमाना द्यौर्योषासीत् ॥ १५॥

सर्गक्षेत्रत्वमत्र योषात्वम् ॥ १६॥

सा रुद्राणी नाम ॥ १७॥

तौ दम्पती भवतः ॥ १८॥

विश्वस्य मातापितरौ ॥ १९॥

अत एव रुद्राण्यम्बिकोच्यते ॥ २०॥

रुद्रस्त्र्यम्बकः ॥ २१॥

तयोर्व्यक्तः शब्द आद्यः पुत्र आसीत् ॥ २२॥

स एव ब्रह्मणस्पतिः ॥ २३॥

गणपतिस्तान्त्रिकाणां भाषायाम् ॥ २४॥

अयं च व्यक्तः शब्दः कर्णपिधानकालानुभूतकल्पो नित्य आकाशे ॥ २५॥

रुद्रः सशब्दां दिवं पुनरभ्यतपत् ॥ २६॥

वायुरजायत ॥ २७॥

स द्वितीयः पुत्रः ॥ २८॥

भैरवस्तान्त्रिकाणां भाषायाम् ॥ २९॥

तं रुद्रोऽन्वभवत् ॥ ३०॥

स स्पर्शः ॥ ३१॥

तत्र द्यौः शरीरायते ॥ ३२॥

तरङ्गवशान्नानात्वव्यवहारश्च वायोः ॥ ३३॥

तदा वायवो रुद्रसूनवो मरुत उच्यन्ते ॥ ३४॥

रुद्रः सस्पर्शवायुशब्दां दिवं पुनरभ्यतपत् ॥ ३५॥

सूर्योऽजायत ॥ ३६॥

स तृतीयः पुत्रः ॥ ३७॥

सोऽग्निः ॥ ३८॥

गुहस्तान्त्रिकाणां भाषायाम् ॥ ३९॥

स एष रुद्रकुटुम्बस्तत्त्वतो व्याख्यातः ॥ ४०॥

# सृष्टिसूत्रम्

एकः प्राणशरीर आत्माऽग्रे सुप्तेरुत्थित एक्षत ॥ १॥

सा प्रथमेक्षाऽनन्तो देशः ॥ २॥

प्रकृतिरेव न विकृतिः ॥ ३॥

शुद्धादाकाशान्नातिरिच्यते ॥ ४॥

अम्बिका विश्वजन्मक्षेत्रत्वात् ॥ ५॥

आप्रलयं निर्विरामानन्तरेक्षाधारा कालः ॥ ६॥

प्रकृतिरेव न विकृतिः ॥ ७॥

तपोध्यानाव्यतिरेकात् ॥ ८॥

मातरिश्वा प्राणनानन्यत्वात् ॥ ९॥

ईक्षते ध्यायति प्राणितीति न पृथक्क्रियाः समष्टौ ॥ १०॥

व्यष्टौ च स्थितप्रज्ञदशायाम् ॥ ११॥

अखण्डधारात्वान्न नाना ॥१२॥

कालपाकजं द्रव्यं तेजो गूढव्यापकविद्युद्रूपम् ॥१३॥

प्रकृतिश्च विकृतिश्च ॥१४॥

तेजःपाकजं द्रव्यमापो गूढव्यापकरसरूपाः ॥१५॥

प्रकृतिश्च विकृतिश्च ॥१६॥

अप्पाकजं द्रव्यमन्नं गूढव्यापकपृथिवीरूपम् ॥१७॥

प्रकृतिश्च विकृतिश्च ॥१८॥

एषा प्रथमा सृष्टिः ॥१९॥

अथ तेजोबन्नानां पाकवशादविभाज्यः संश्लेषः ॥२०॥

इयमेव त्रिगुणा प्रकृतिर्बादरायणस्य ॥२१॥

सर्वस्य दृश्यस्य मूलसामग्री ॥२२॥

आत्मा तदन्तरोऽभूत् ॥२३॥

तमिन्द्रमाहुः प्राञ्चः ॥२४॥

ईश्वरं नव्याः ॥२५॥

द्वितीया सृष्टिरेषा ॥ २६ ॥

त्रिगुणायाः प्रकृतेः पाकवशादण्डानामुद्भवः ॥ २७ ॥

आत्मा तेषामन्तरोऽभूत् ॥ २८ ॥

ते देवा उच्यन्ते ॥ २९ ॥

अण्डेषु पाकवशात् पिण्डानामुद्भवः ॥ ३० ॥

आत्मा तेषामन्तरोऽभूत् ॥ ३१ ॥

ताः प्रजा उच्यन्ते ॥ ३२ ॥

इयं तृतीया व्यक्तजगत्सृष्टिः व्यक्तजगत्सृष्टिः ॥ ३३ ॥

# ईश्वरमीमांसा

## प्रथमोऽध्यायः

### प्रथममाह्निकम्

आत्मा परमो विश्वस्यान्तरे ॥ १॥

अणोरणीयान् वस्तुतः ॥ २॥

महतो महीयान्निजया शक्त्या ॥ ३॥

तमेव सत्यं लोकमाहुः ॥ ४॥

स एव परं ब्रह्मोच्यते ॥ ५॥

तस्य शक्तिः समन्ततः प्रसरन्ती विश्वस्य सर्गायाभूदिति तद्विदां दर्शनम् ॥ ६॥

सृष्टस्य सृष्टस्य पुनरन्तरो भवति परमो यत्र यत्र प्राणः ॥ ७॥

स जीव उच्यते ॥ ८॥

स एव विश्वोपाधिक ईश्वरः ॥ ९॥

परमेप्येतत्पदम् ॥ १० ॥

प्रसरन्त्याः शक्तेः प्रान्तेष्वेवैते जीवलोकाः ॥ ११ ॥

जीवलोकानां सत्यस्य परमात्मनश्च मध्ये शुद्धा महती परमात्मशक्तिरेव ज्वलन्ती भवति ॥ १२ ॥

तां शुद्धां तपो लोकमाहुः परमस्य हि तत्तपः ॥ १३ ॥

आत्मशक्तिं विजृम्भयितुं सङ्कोचयितुं च परमः प्रभवति ॥ १४ ॥

तस्माद्विश्वसर्गप्रलयौ तदधीनौ ॥ १५ ॥

## द्वितीयमाह्निकम्

विश्वान्तारस्य परमात्मस्थानत्वे तस्य रूपं व ङ्क्तव्यम् ॥ आक्षेपः ॥ १ ॥

परमात्मनोऽनर्थान्तरमिति चेत्सप्तमी नोपपद्यते ॥ २ ॥

बुद्ध्यपेक्ष एकस्यैवाधाराधेयत्वेन निर्देश इत्यदोषः ॥ समाधानम् ॥ ३ ॥

हृदि ह्येष आत्मेतिवत् ॥ ४ ॥

हृदेव खल्वात्माऽयं यथाऽऽमनन्ति हृदयशब्दार्थनिरूपणे छन्दोगाः ॥ ५ ॥

प्रलये विश्वस्योपसंहारात्तत्काले परमस्य विश्वान्तरत्वानुपपत्तिरिति चेत् ॥ आक्षेपः ॥ ६॥

सर्गकालिकविवक्षातो न दोषः ॥ समाधानम् ॥ ७॥

अलोक्यत्वात्परमात्मनो लोकत्वानुपपत्तिरिति चेत् ॥ आक्षेपः ॥ ८॥

लोककत्वादर्थसङ्गतिः ॥ समाधानम् ॥ ९॥

उभयार्थकत्वमन्नशब्दवत् ॥ १०॥

एतेन शक्तेर्लोकत्वं च व्याख्यातम् ॥ ११॥

परमस्य स्वरूपतो जीवत्वमिति चेदेकस्यानेकान्तरत्वानुपपत्तिः ॥ पूर्वपक्षः ॥ १२॥

आकाशवदनेकान्तरत्वमुपाधिवशादिति चेदणोरणीयस्त्वं न सिध्येत् ॥ १३॥

अव्यक्तत्वेन प्रतिबिम्बनानुपपत्तिः ॥ १४॥

तस्मादन्य एव भावो जीव इति चेत् ॥ १५॥

प्रतिबिम्ब एव भवति ॥ सिद्धान्तः ॥ १६॥

अव्यक्तस्य व्यक्तत्वेन न प्रतिबिम्बनं नाव्यक्तत्वेनापि ॥ १७॥

स्वप्नदृष्टव्यक्तिष्वात्मप्रतिबिम्बनवत्तदुपपत्तिः ॥१८॥

परमस्य निजशक्तिप्रसरणोपसंहरणसङ्गतिः कथमिति चेत् ॥ प्रतिपक्षः ॥ १९॥

इच्छावत्त्वात् ॥ उत्तरम् ॥ २०॥

अस्माकमिच्छातपसी इव परमस्येच्छातपसी परमस्येच्छातपसी ॥२१॥

## द्वितीयोऽध्यायः

### प्रथममाह्निकम्

स परमात्मा प्राणिति प्राणेन विना ॥१॥

तेन प्राणिति सर्वः प्राणोऽपि ॥२॥

तस्मात्तं प्राणानां प्राणमाहुः ॥३॥

स मनुते मनसा विना ॥४॥

तेन मनुते मनः सर्वमपि ॥५॥

तस्मात्तं मनसां मन आहुः ॥६॥

स इच्छत्यहङ्कारं विना ॥ ७॥

तेनेच्छति सर्वो जीवः ॥ ८॥

तस्मात्तं चेतनानां चेतनमाहुः ॥ ९॥

स पश्यति चक्षुषा विना ॥ १०॥

तेन पश्यति चक्षुः सर्वमपि ॥ ११॥

तस्मात्तं चक्षुषां चक्षुराहुः ॥ १२॥

स शृणोति श्रोत्रेण विना ॥ १३॥

तेन शृणोति सर्वमपि श्रोत्रम् ॥ १४॥

तस्मात्तं श्रोत्राणां श्रोत्रमाहुः ॥ १५॥

स वदति वाचा विना ॥ १६॥

तेन वदति वाक् सर्वाऽपि ॥ १७॥

तस्मात्तं वाचां वाचमाहुः ॥ १८॥

एतेन तस्यान्यानि ज्ञानानि कर्माणि च व्याख्यातानि ॥ १९॥

इतरेषां ज्ञानकर्मणां च तदधीनत्वात् ॥ २०॥

## द्वितीयमाह्निकम्

तदायत्तानि सर्वाणि ज्ञानानि कर्माणि चेत्सर्वो दुष्कृतकार्योऽनपराधः स्यात् ॥ आक्षेपः ॥ १ ॥

श्लाघापात्रं च न स्यात्सर्वः सुकृतकारी ॥ २ ॥

नरकनाकप्राप्त्योरन्याय्यत्वनिष्कारणत्वे च प्राप्नुयाताम् ॥ ३ ॥

प्रत्युत परमस्य क्वचिद्दुष्कृतकारित्वं च प्रसज्येतेति चेत् ॥ ४ ॥

ज्ञातुं कर्तुं च शक्तिरेव परमाधीना न ज्ञानकर्मविशेषा इति नैते दोषाः ॥ समाधानम् ॥ ५ ॥

एवं चेन्मनःप्रभृतीनामेवापराधेन जीवस्य कष्टं प्रसज्येत ॥ आक्षेपः ॥ ६ ॥

मैवमिच्छापूर्वकत्वाद्धीकर्मणाम् ॥ समाधानम् ॥ ७ ॥

इच्छा च परमायत्तेति चेत् ॥ आक्षेपः ॥ ८ ॥

इषितुं शक्तिरेव परमायत्ता नेच्छाविशेषा इत्यदोषो नेच्छाविशेषा इत्यदोषः ॥ समाधानम् ॥९ ॥

॥ ईश्वरमीमांसा समाप्ता ॥

# क्रियाशक्तिमीमांसा

**प्रथमः खण्डः**

यया प्राणिति परमः सा तस्य क्रियाशक्तिः ॥१॥

तस्या एव बलाख्या ॥२॥

सा व्याप्नोति भुवनं तपनशक्तिरिव सूर्यस्य ॥३॥

पचति च ॥४॥

तामेव विद्युच्छक्तिमाहुः ॥५॥

कालयतीति सा काली ॥६॥

तच्च कालनमव्यक्तस्वरद्वारा ॥७॥

पुमाख्यया कालः ॥८॥

तारयतीति तारा ॥९॥

तच्च तारणमव्यक्तस्वरद्वारा ॥१०॥

पुमाख्यया तारः ॥ ११ ॥

तारः प्रणव इत्यनर्थान्तरम् ॥ १२ ॥

संहरतीति प्रचण्डचण्डी ॥ १३ ॥

तच्च संहरणमव्यक्तज्योतिर्द्वारा ॥ १४ ॥

नपुंसकाख्यया वज्रम् ॥ १५ ॥

शची शचधात्वर्थानुगमात् ॥ १६ ॥

## द्वितीयः खण्डः

प्राणनं क्रियाशक्तेरन्यच्चेत् क्रियायाः क्रियान्तरमापद्येत ॥ आक्षेपः ॥ १ ॥

अनन्यश्चेत् क्रियाशक्तेस्तत्र करणत्वानुपपत्तिः ॥ २ ॥

शक्तेः क्रियातो भेदाददोषः ॥ समाधानम् ॥ ३ ॥

विद्युच्छक्तिस्तेजोविशेषश्चेच्छक्तिर्द्रव्यं स्यात् ॥ आक्षेपः ॥ ४ ॥

तेजोविशेषशक्तिश्चेत्परमस्य न स्यात् ॥ ५ ॥

7 सा तेजोविशेषोपाधिनिरपेक्षैवात्रोदितेति न दोषः ॥ समाधानम् ॥ ६ ॥

शक्तिः कालश्चेद्द्रव्यं स्यात् ॥ आक्षेपः ॥ ७॥

कालो द्रव्यमिति वैशेषिकसङ्केतमात्रमिति नैतच्चोद्यं नैतच्चोद्यम् ॥ समाधानम् ॥ ८॥

॥ क्रियाशक्तिमीमांसा समाप्ता ॥

# सिद्धान्तसारसूत्रम्

## प्रथमोऽध्यायः

इन्द्रो विश्वस्य राजा ॥१॥

सगुणो नभःशरीरः ॥२॥

निर्गुणो विश्वस्मादुत्तरः ॥३॥

कार्यं ब्रह्म पूर्वः ॥४॥

कारणमुत्तरः ॥५॥

पूर्वस्य व्यक्तित्वं प्रपञ्चावगाहि ॥६॥

उत्तरस्य प्रपञ्चातीतम् ॥७॥

सिद्धपुरुषवत्पूर्वः ॥८॥

मुक्तपुरुषवदुत्तरः ॥९॥

एकस्य द्वैविध्यमेवं सोपाधिकत्वनिरुपाधिकत्वाभ्याम् ॥१०॥

केचित्पूर्वां शक्तिमुत्तरं परमात्मानमाहुः ॥ ११ ॥

उत्तरस्य शक्तिरेवाकाशोपाधिनाव्यक्तित्वमितेति ॥ १२ ॥

एके प्राहुः पूर्वं पुरुषमुत्तरां शक्तिम् ॥ १३ ॥

आद्यायाः शक्तेरुपाधितो व्यक्तित्वं निष्पन्नं ततः प्राक् तस्या अन्तः-करणिनामिव व्यक्तित्वं नास्तीति ॥ १४ ॥

आत्मनः कर्तृत्वं चेत्सत्यं पूर्वः पक्षः सत्यः ॥ १५ ॥

स्वभावत एव सृष्टिश्चेदुत्तरः ॥ १६ ॥

उपक्रान्तोंऽश उभयत्रान्वेति ॥ १७ ॥

## द्वितीयोऽध्यायः

द्योकालान्तरिक्षाणां समाहार इवाकाशः ॥ १ ॥

दिव्यन्तरिक्षे च स शब्दो लोकव्यवहारे ॥ २ ॥

भेदमविज्ञायैव व्यवहारः ॥ ३ ॥

सूक्ष्मं तेजो द्यौः ॥ ४ ॥

सूक्ष्मा आपोऽन्तरिक्षम् ॥ ५ ॥

अव्यक्तः शब्दः कालः ॥ ६॥

द्योकालावितरेतरपरिणामौ भावौ प्रादुर्भावेषु ॥ ७॥

इतरेतरसम्बद्धौ च ॥ ८॥

एकस्मिन्नेव वस्तुनि द्वितयं सौक्ष्मतमत्वे ॥ ९॥

प्रादुर्भावेषु द्यौर्विद्युद्भवति ॥ १०॥

कालः शब्दो भवति ॥ ११॥

उभयमपीन्द्रियग्राह्यं स्थूलदशायाम् ॥ १२॥

कार्यगम्यं सूक्ष्मदशायाम् ॥ १३॥

सहजात्वतिसूक्ष्मा दशा ॥ १४॥

तदेतत्परस्परसंश्लिष्टमतिसूक्ष्मं द्वितयमेकेन नाम्ना परमं व्योम ॥ १५॥

परमे व्योम्न्यन्तरिक्षम् ॥ १६॥

त्रयं चैतदाकाशपर्यायैरेकमिवोच्यते ॥ १७॥

शक्तिश्च प्राणान्नातिरिच्यते ॥ १८॥

स इन्द्रः पुरुषत्वप्राप्तेरनन्तरम् ॥ १९॥

द्योकालसंश्लिष्टान्तरिक्षोपाधितस्तस्य पुरुषत्वप्राप्तिः ॥ २०॥

द्योकालौ शक्तेरन्ये विभूती ॥ २१॥

शक्तेरेवान्तरिक्षे व्यापारे द्यौः कालश्च निष्पन्नौ भवतोऽन्तरिक्षादि तु सृष्टम् ॥ २२॥

तस्या एव रूपान्तरे इत्युक्तं भवति ॥ २३॥

व्यक्तसर्गे निष्पन्नः सूर्योऽन्या विभूतिः ॥ २४॥

एवं प्राणो द्यौः कालः सूर्यश्चेति चतस्रो विभूतय इन्द्रस्य ॥ २५॥

# मनिषासङ्ग्रहः

## प्रथममात्मोपव्याख्यानम्

एक एवात्मा सर्गात्प्राक् ॥ १॥

अनन्तरं परितः पूर्णः शक्त्या ॥ २॥

पचति भुवनान्यजस्रम् ॥ ३॥

प्राणे तु स्फुरति ॥ ४॥

स्वयं समष्टिप्राणः ॥ ५॥

तमेकमेव सन्तं वैभवभेदाच्चतुर्धा प्राहुः ॥ ६॥

मूलभूतं परमात्मानम् ॥ ७॥

सर्गादनन्तरं तमेव भुवनानि पचन्तमीश्वरम् ॥ ८॥

एष इन्द्रः प्राचां भाषायाम् ॥ ९॥

ब्रह्माण्डप्राणे रविमण्डले स्फुरन्तं हिरण्यगर्भम् ॥ १०॥

एष सविता प्राचां भाषायाम् ॥ ११॥

पिण्डेषु श्रेष्ठे स्फुरन्तं विराजम् ॥ १२॥

एष वैश्वानरः प्राचां भाषायाम् ॥ १३॥

## द्वितीयं कालोपव्याख्यानम्

आत्मनो विज्ञानधारा कालः ॥ १॥

साऽन्तर्मुखी प्रतीची ॥ २॥

बहिर्मुखी पराची ॥ ३॥

विश्रान्ता शान्तिः ॥ ४॥

तासामेतान्यपराणि नामत्रिकाणि ॥ ५॥

प्रज्ञानं विज्ञानं मौनम् ॥ ६॥

योगः सङ्गस्त्यागः ॥ ७॥

व्याप्तिर्व्यायाम उपरतिः ॥ ८॥

तासामेकैकां पुनर्वैभवभेदाच्चतुर्धा चतुर्धा व्यवहरन्ति ॥ ९॥

सर्गः स्वप्नस्तपः सायुज्यं चेति प्रतीचीम् ॥ १०॥

स्थितिर्जागरितं कर्म भोगश्चेति पराचीम् ॥ ११ ॥

प्रलयो निद्रा सम्प्रसादो मुक्तिश्चेति विश्रान्ताम् ॥ १२ ॥

अहर्वा एतद्यत्पराची ॥ १३ ॥

रात्रिर्वा एषा यद्विश्रान्ता ॥ १४ ॥

सन्ध्या वा एषा यत्प्रतीची ॥ १५ ॥

भूतं भवद्भावि च विज्ञानधारा ॥ १६ ॥

एवं कालस्य द्विधाऽपि त्रित्वं व्याख्यातम् ॥ १७ ॥

इतोऽन्यो व्यवहारो भाक्तः ॥ १८ ॥

## तृतीयं लोकोपव्याख्यानम्

अयं लोकः प्रथमः ॥ १ ॥

अधिपिण्डं शरीरम् ॥ २ ॥

सर्वे ग्रहा असूर्यचन्द्रा अनेन व्याख्याताः ॥ ३ ॥

वायुमण्डलं द्वितीयो लोकः ॥ ४ ॥

अधिपिण्डं पञ्चात्मकः प्राणः ॥ ५॥

तृतीयश्चन्द्रमाः ॥ ६॥

अधिपिण्डं मनः ॥ ७॥

उपग्रहाः सर्वे चन्द्रमसा व्याख्याताः ॥ ८ ॥

चतुर्थोऽसावादित्यः ॥ ९॥

अधिपिण्डं बुद्धिः ॥ १०॥

अमुनाऽऽदित्येनान्येऽण्डपतय आदित्याश्च व्याख्याताः ॥ ११॥

पञ्चम आकाशः ॥ १२॥

अधिपिण्डं गुहा ॥ १३॥

षष्ठः पराशक्तिः ॥ १४॥

अधिपिण्डं कुण्डलिनी ॥ १५॥

सप्तमः परमात्मा ॥ १६॥

अधिपिण्डं जीवात्मा ॥ १७॥

क्रमात्सप्तस्वेतेषु सप्तव्याहृतयो भवन्ति ॥ १८॥

त्रैलोक्यपक्षे ॥ १९ ॥

अयं लोकः पृथिवी ॥ २० ॥

वायुमण्डलं चन्द्रमा आकाशश्चेत्यन्तरिक्षं त्रेधा ॥ २१ ॥

सूर्यादित्रिकं शेषं त्रिविधा द्यौः ॥ २२ ॥

## चतुर्थं प्रकृत्युपव्याख्यानम्

सर्वदृश्यचित्रभित्तिराकाशः ॥ १ ॥

अदितिर्वा एषा यदाकाशः ॥ २ ॥

सा प्रकृतिस्तेजोऽबन्नानाम् ॥ ३ ॥

शक्तिरन्या प्रकृतेः ॥ ४ ॥

दृश्यमूलसामग्री प्रकृतिः ॥ ५ ॥

चेतनव्यापरः शक्तिः ॥ ६ ॥

## पञ्चमं शक्तितरङ्गोपव्याख्यानम्

शक्तेस्त्रयस्तरङ्गाः ॥ १ ॥

प्राणविद्युत्प्रणवाः ॥ २॥

तेषां भूयः स्पष्टपवनसौदामिनीशब्दात्मनाऽभिव्यक्तिर्निमित्तैः ॥ ३॥

विद्युदेवोपाधिभेदादितरे ज्योतिषी ॥ ४॥

## षष्ठं विद्योपव्याख्यानम्

सर्वत्र ब्रह्मदृष्टिः शाण्डिल्यविद्या ॥ १॥

महन्मौनं भूमविद्या ॥ २॥

आकाशलक्ष्ये दृष्टिः परोवरीयसीविद्या ॥ ३॥

हृदयाकाशे दहरविद्या ॥ ४॥

दृष्टिर्द्रष्टा वा लक्ष्यं चेदक्षिपुरुषविद्या ॥ ५॥

प्राणगत्यन्ववेक्षणं संवर्गविद्या ॥ ६॥

अन्तरस्वरानुसन्धानमक्षरविद्या ॥ ७॥

मन्त्राक्षरानुसन्धानं मन्त्रोद्गीथविद्या ॥ ८॥

अन्तरूष्मानुसन्धानं ज्योतिर्विद्या ॥ ९॥

आत्मज्ञप्तिरविचालिता सद्विद्या ॥१०॥

उत्तरगात्रलक्ष्याबुद्धिर्वैश्वानरविद्या ॥११॥

प्रकाशलक्ष्या मधुविद्या ॥१२॥

हिरण्मयपुरुषलक्ष्या पुरुषोद्गीथविद्या ॥१३॥

उपजिह्वालक्ष्येन्द्रयोनिविद्या ॥१४॥

जिह्वारसलक्ष्या वारुणीविद्या ॥१५॥

## सप्तमं त्रिपुट्युपव्याख्यानम्

अनुभूतिरवितथा ॥१॥

भोक्तृ भोग्यं भोगरूपा ॥२॥

अविभाज्यास्त्रयोंशा एते ॥३॥

तस्मादनुभूतेरेकरूपता त्रिरूपता च ॥४॥

आदिर्भोक्ता परमात्मा ॥५॥

आदि भोग्यमाकाशम् ॥६॥

आदिर्भोगस्तपः ॥ ७ ॥

सर्गात् प्राक् सर्वभूतबीजमाकाशं परमात्मनि लीनम् ॥ ८ ॥

न तदा भोगः प्रस्फुटस्तपसः प्रशान्तेः ॥ ९ ॥

तस्मादविभागस्तदा भोक्तृभोग्ययोः ॥ १० ॥

भोग एव भोक्तृभोग्यविभागायेत्युक्तं भवति ॥ ११ ॥

भोक्ता सत्य उच्यते ॥ १२ ॥

भोग्यमृतं प्राप्तत्वात् ॥ १३ ॥

आदौ तयोर्विभक्ततयाऽभिव्यक्तिं पश्यन्नृतं च सत्यं चाभीद्धात्तपसोऽध्यजायतेति ऋषिराह ॥ १४ ॥

## अष्टमं जीवोपव्याख्यानम्

श्रेष्ठः प्राण एवान्ये प्राणाः स्वरूपतः ॥ १ ॥

स्थानभेदाद्भेदेन व्यवहारः ॥ २ ॥

एकस्थस्याणोरपि रश्मिभिः सर्वस्थानव्याप्तिः ॥ ३ ॥

स कर्मभिः क्षणे क्षणे गुणतो विपरिणम्यते ॥ ४ ॥

न स्वरूपतः ॥ ५॥

तस्यैवोत्क्रान्तिर्गतिश्च ॥ ६॥

सादिः ॥ ७॥

जीवात्मन उपाधिः ॥ ८॥

प्राणस्य सादित्वाज्जीवस्यापि सादित्वमौपाधिकम् ॥ ९॥

एतेन कर्मणामुपाधीनं चानादित्वं प्रत्युक्तं भवति ॥ १०॥

तस्यात्मलाभो जनकस्य प्राणात् ॥ ११॥

दीपादिव दीपस्य ॥ १२॥

अनन्तरं तत्रात्मभासः ॥ १३॥

आगतिश्चेत्सत्या तत्र नूतनेऽवतीर्णस्य प्रौढस्य प्राणस्यावेशः ॥ १४॥

तदोभयोः सायुज्यं दीपयोरिव युक्तयोः ॥ १५॥

श्रुतेरागतिः सत्यैवेति चेदश्रुतिरपि ॥ १६॥

गतस्य यावत्सम्पद्गतिरेवेत्येकं मतम् ॥ १७॥

आर्याणां श्राद्धकाण्डं प्रायस्तन्मतानुसारात् ॥ १८॥

पुण्यपापज्ञानाज्ञानतप आलस्यनिरर्थकतेति चेच्छ्रीघ्रविलम्बाभ्यां तत्सार्थकत्वम् ॥ १९॥

अन्यस्याप्येवम् ॥ २०॥

नित्यबन्धवादिनो नास्तिकेभ्योऽपि खलाः ॥ २१॥

गतस्यागतिः कर्मफलक्षये भूय इत्यपरं मतम् ॥ २२॥

श्रेष्ठस्य प्रकृतिः प्रथममते सर्वधा पितृप्राणानुसारिणी ॥ २३॥

द्वितीयमते प्राधान्येन स्वपूर्वप्रकृत्यनुसारिणी ॥ २४॥

उभयत्रापि परिणामस्त्वधुनातनकर्मायत्तः ॥ २५॥

फलेषु दृष्टहेतुकत्वान्नादृष्टकल्पनम् ॥ २६॥

सति सम्भवे स्वप्रकृतेर्हेतुत्वं न निवार्यते ॥ २७॥

विषयभेदेनोभयोर्मतयोः सम्भवोऽस्तीति वासिष्ठो मन्यते वासिष्ठो मन्यते ॥ २८॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनो-
र्गणपतेः कृतिर्मनीषासङ्ग्रहः समाप्तः ॥

# अथ शान्तितपोबोधानां फलनिरूपणम्

शान्तेरैकात्म्यम् ॥ १॥

तपसो दिव्यान् कामान् मानुषान् वा ॥ २॥

तरति बोधान्मृत्युम् ॥ ३॥

भूमदहरानुज्ञोद्गीथमधुशाण्डिल्यवारुणीसद्विद्याः शान्त्यै ॥ ४॥

ज्योतिर्वैश्वानरसंवर्गाक्षरमन्त्रोद्गीथपुरुषोद्गीथास्तपः ॥ ५॥

उपकोसलव्यानोद्गीथाकाशोद्गीथानां उपास्तिर्बोधः ॥ ६॥

सर्वस्यात्मभावः शान्तिः ॥ ७॥

आत्मवृत्तेरैकाग्र्यं तपः ॥ ८॥

सर्वस्मादात्मनः पृथक्करणं बोधः ॥ ९॥

# गायत्रीव्याख्यानम्

गायत्रीं सावित्रीं व्याख्यास्यामः ॥१॥

यया विप्राणां द्वितीयं जन्म किल भवति संस्कृतानाम् ॥२॥

ज्ञानशक्तेः सावित्री नातिरिच्यते ॥३॥

सवितुर्हिरण्यगर्भस्येयं शक्तिरिति ॥४॥

तां गायत्र्या समुपासते ॥५॥

यां महता तपसा ददर्श भगवान् विश्वामित्रो महर्षिः ॥६॥

गायत्र्याः सविता देवतेति श्रुतेरनुक्रमणिकावचनाच्च ॥७॥

मन्त्रस्य पुरुषो देवतेति केचिन्मन्यन्ते ॥८॥

पुरुषश्च मण्डलान्तर्वर्ती न मण्डलमात्रम् ॥९॥

य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यत इति श्रुत्या निरूपितः सः ॥१०॥

ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायण इति प्राचां ध्यानश्लोकोत्र

समर्थको भवति ॥ ११॥

मुक्ता विद्रुमेत्यादि ध्यानश्लोकात्प्रसिद्धा नारीत्यपरे ॥ १२॥

गायत्री सवित्री सरस्वतीति स्त्रीलिङ्गनिर्देशेभ्यश्च ॥ १३॥

मन्त्रलिङ्गन्तु भर्गसो ध्येयत्वनिर्देशान्न पुंसकपरम् ॥ १४॥

वस्तुतस्तु न स्त्री ॥ १५॥

न पुमान् ॥ १६॥

न नपुंसकम् ॥ १७॥

सर्वलिङ्गापेतं यत् किञ्चिद्वस्तु ॥ १८॥

तस्य सर्वैर्लिङ्गैः शास्त्रे व्यवहारो दृश्यते ॥ १९॥

सदेव सोम्येति नपुंसकेनारम्भे ॥ २०॥

अनेन जीवेनात्मनेति पुंलिङ्गेन मध्ये ॥ २१॥

तेजः परस्यां देवतायामिति स्त्रीलिङ्गेनान्ततः ॥ २२॥

हिरण्मयपुरुषाकृतिसम्बन्धात्तस्य पुरुषत्वेन ध्यानम् ॥ २३॥

शक्तिरूपतया स्त्रीत्वेन ॥ २४॥

गायत्री च छन्दः ॥ २५॥

न देवता ॥ २६॥

छन्दसि देवतादृष्टिः केवला भावना ॥ २७॥

केषाञ्चित्सवितुरिति षष्ठी धर्मिपरा ॥ २८॥

भर्ग इति द्वितीया धर्मपरा ॥ २९॥

तन्मते सविता ज्ञाता ॥ ३०॥

भर्गो ज्ञानशक्तिः ॥ ३१॥

केषाञ्चिच्छरीरपरा षष्ठी ॥ ३२॥

शरीरि परा द्वितीया ॥ ३३॥

तन्मते सविता हिरण्मयपुरुषाकृतिः ॥ ३४॥

भर्गस्तदन्तरभूतं वस्तु ॥ ३५॥

परेषां षष्ठीद्वितीययोरेकार्थत्वम् ॥ ३६॥

राहोः शिर इतिवत् ॥ ३७॥

चिदेव सोऽर्थः ॥ ३८॥

द्वितीयमर्थमृजुं मन्यते वासिष्ठः प्रकरणात् ॥ ३९॥

प्रथमं वा हिरण्मयपुरुषाकृतिसम्बन्धात्यागेन ॥ ४०॥

मान्त्रवर्णिक उत्तरोऽर्धर्च आध्यात्मिकः ॥ ४१॥

अमुष्योद्देशेनास्य ध्यानमुपदिष्टं भवति ॥ ४२॥

धीमूलान्वेषणं ध्यानप्रकारः ॥ ४३॥

यथा लक्षणं ध्येयत्वात् ॥ ४४॥

अत्रामुष्यदृष्टिरुत्कर्षात् ॥ ४५॥

आगमानां सार आसुरी गायत्री पञ्चदशाक्षरी मध्यमस्य ज्ञानशक्तिः ॥ ४६॥

निगमानां सार आर्षी गायत्री सावित्री ॥ ४७॥

इति सप्तचत्वारिंशता सूत्राणां गायत्रीव्याख्यानं भवति ॥ ४८॥

# योगव्याख्यानम्

योगं व्याख्यास्यामः ॥ १॥

तप उपासनं योगश्चेति पर्यायाः ॥ २॥

पदमिदं प्राधान्येन पतञ्जलिनोपयुक्तम् ॥ ३॥

योगश्चित्तवृत्तिनिरोध इति तस्य लक्षणं तेनोक्तम् ॥ ४॥

व्यतिरेकतस्तत् ॥ ५॥

अन्वयत आलोचनं योगस्य लक्षणम् ॥ ६॥

आलोचन एव चित्तवृत्तिनिरोधः ॥ ७॥

आलोचनं च तपः ॥ ८॥

तदेवोपासनम् ॥ ९॥

आलोचने स्वात्मस्थितिरपि वृत्तिरिति चेन्मूलच्छेदः ॥ १०॥

पश्य विस्मृतवस्तुनोऽन्तर्मार्गणे निजां स्थितिम् ॥ ११॥

स योगस्तत्तपः ॥ १२ ॥

मृगयमाणो लब्ध्वैव निवर्तते ॥ १३ ॥

योगी त्वन्यस्य लब्धव्यस्याभावान्नित्यं मृगयत इव ॥ १४ ॥

अनात्मजिज्ञासोरालोचनं मार्गणम् ॥ १५ ॥

आत्मजिज्ञासोर्योगः ॥ १६ ॥

पश्य्य दुःखे निजां स्थितिम् ॥ १७ ॥

स योगस्तत्तपः ॥ १८ ॥

दुःखितः शिष्टभोग्यजातसन्निकर्षात्पुनर्निवर्तते ॥ १९ ॥

योगी तु जितभोग्यजातत्वान्न जातुचिन्निवर्तते ॥ २० ॥

सुषुम्नायाः संवित्सहस्रारपर्यन्तं प्रवहति ॥ २१ ॥

तत्र मानसस्थानमासाद्याप्रतापा शीता भवति ॥ २२ ॥

सा शीता सर्वनाडीद्वारा शरीरे प्रवहति ॥ २३ ॥

संवित्प्रवाहमध्ये सेतुं बध्नीत स यथा मानसस्थानं न प्राप्नुयात् ॥ २४ ॥

भ्रूमध्य इत्येकः प्रकारः ॥ २५ ॥

सेतुबन्धो नाम स्थापनं ध्यानेन ॥ २६॥

तदा संविदः प्रभुत्वं पूर्णं स्यादविभक्तत्वादशीतत्वाच्च ॥ २७॥

भ्रूमध्ये स्थापितायाः संविदोऽग्रमेव लक्ष्यं स्यात् ॥ २८॥

कण्ठ इत्यपरः प्रकारः ॥ २९॥

तत्र संविदो मध्यमेव लक्ष्यं स्यात् ॥ ३०॥

हृदय इत्यन्यः प्रकारः ॥ ३१॥

तत्र संविदो मूलमेव लक्ष्यं स्यात् ॥ ३२॥

यः संविदोऽग्रे प्रतितिष्ठति स विश्वे पुरुषे प्रतितिष्ठति ॥ ३३॥

यः संविदो मध्ये प्रतितिष्ठति स तैजसे पुरुषे प्रतितिष्ठति ॥ ३४॥

यः संविदो मूले प्रतितिष्ठति स प्राज्ञे पुरुषे प्रतितिष्ठति ॥ ३५॥

देहेऽन्यत्र च प्रवहणाज्जडसंयोगेन विभक्तत्वेन च संविदः शक्तिः संसारिषु क्षीयते ॥ ३६॥

ततश्चात्मा परिभूयते बाह्यैः ॥ ३७॥

केवलायां नाड्यां विलसनाद्योगिषु सा विजृम्भते ॥ ३८॥

ततश्चात्मा न परिभूयते बाह्यैः ॥ ३९ ॥

मानसस्थानसंयोगात्संविच्छीतत्वेन न शक्तिमती संसारिषु ॥ ४० ॥

तदभावेन शक्तिमती योगिषु ॥ ४१ ॥

ज्ञानायेन्द्रियसापेक्षत्वात्संसारिषु संविदल्पज्ञा ॥ ४२ ॥

स्वतन्त्रत्वाद्योगिषु दूरज्ञा ॥ ४३ ॥

इयं पुरोनाडीमवलम्ब्य योगस्य पद्धतिः ॥ ४४ ॥

प्रथममाकाशादेकां शक्तिमात्मशिरसि निपतन्तीं ध्यायेत् ॥ ४५ ॥

अनन्तरं शिरसो मूलाधारपर्यन्तं निपतन्तीम् ॥ ४६ ॥

इयं पश्चान्नाडीमवलम्ब्य योगस्य पद्धतिः ॥ ४७ ॥

इदं सप्तचत्वारिंशता सूत्राणां योगव्याख्यानं भवति ॥ ४८ ॥

# सीताव्याख्यानम्

सीतां व्याख्यास्यामः ॥१॥

आदिकाव्यस्य या नायिका ॥२॥

सूर्यचन्द्रविद्युदग्निपुष्पपल्लवमणिहिरण्यादौ सर्वजननयनानन्दिनी कान्तिरस्ति सा श्रीरुच्यते देवी ॥३॥

सीता सर्वाङ्गेषु शोभनोत्तमोत्तमा नारी ॥४॥

तस्माच्छ्रियोंशः साधारणदृष्ट्यापि ॥५॥

सतामीश्वरार्पितो निष्कामकर्मराशिर्यज्ञ उच्यते ॥६॥

यज्ञश्च विष्णुर्यज्ञो वै विष्णुरिति श्रुतेः ॥७॥

यथा सकामव्यष्टिकर्ममयः पुरुषः संसारी तथा निष्कामसमष्टिकर्ममयोऽवतारः ॥८॥

दाशरथिं रामं सप्तममवतारमाहुः ॥९॥

सकामव्यष्टिकर्मणामेव फलानि वर्षशतभोग्यानाहुः ॥१०॥

किमुत समष्टिकर्मणः फलम् ॥११॥

यज्ञमयस्यावतारस्य भोगाय किमपि स्रष्टव्यं स्यान्नियत्या ॥१२॥

सत एव सृष्टिर्नासतः ॥१३॥

अस्ति काचन देवता ॥१४॥

सा नियतिमाराधयितुं स्वयमप्यवतरति ॥१५॥

तामेव लक्ष्मीमाहुः ॥१६॥

रामस्यानुभूतये पर्याप्तं फलं सीता ॥१७॥

रूपे शीले वाचि च मधुरा ॥१८॥

अस्माकं तु चरिते मधुरा ॥१९॥

अयोनिजां सीतामाहुः पूर्वे ॥२०॥

अपविद्धां केचित् ॥२१॥

अत्रेयं चर्चा भवति ॥२२॥

अपां सूर्ये प्रथमाहुतिस्ततः सोमो जायते ॥२३॥

तस्य पर्जन्ये ततो वर्षम् ॥२४॥

तस्य पृथिव्यां ततोऽन्नम् ॥२५॥

तस्य पुरुषे ततो रेतः ॥ २६॥

तस्य स्त्रियां ततः पुरुषः ॥ २७॥

एवं पञ्चाहुतयो जन्मप्रयोजिकाः ॥ २८॥

तस्मादयोनिजत्वमेव न सम्भवतीत्येकः पक्षः ॥ २९॥

देवता मुक्तपुरुषो वा लोकानुग्रहाय भुवमवतरेत् ॥ ३०॥

तत्राहुतिसङख्या क्वचिदादृता स्यान्मातापित्रोरनुग्रहाय ॥ ३१॥

क्वचित्तृतीयस्यामेवाहुतौ शरीरधारणं माहाभाग्यात् ॥ ३२॥

अवतीर्णस्याहुतयो नपातपर्यायाः ॥ ३३॥

अपि त्ववतरणपर्यायाः ॥ ३४॥

अवतरतः पततो वा मार्ग एकः ॥ ३५॥

भौतिकरसोगुप्तस्वशक्तिर्जडप्रायः पतति ॥ ३६॥

व्यक्तस्वशक्तिश्चिज्ज्वलितोऽवतरति ॥ ३७॥

अवतीर्णस्य भूमण्डलं प्रतिपन्नस्य तृतीयस्यामाहुतावेवापि मनोबलेन कार्यार्थं शरीरं भवितुं शक्यमित्युक्तं भवति ॥ ३८॥

तस्मादयोनिजत्वं नासम्भवीत्यपरः पक्षः ॥ ३९ ॥

सीता पतिदेवतानां निदर्शनम् ॥ ४० ॥

यतस्त्यागेऽपि भर्तरि निष्ठिता ॥ ४१ ॥

सीतायाः प्रभुत्वं भूतेष्वपि ददृशे ॥ ४२ ॥

हनूमच्छिवाशंसायामग्नौ ॥ ४३ ॥

आत्मनः प्रवेशे च ॥ ४४ ॥

अवकाशः प्रार्थनासमये भुवि ॥ ४५ ॥

लङ्कावाससमये घोरेणोपवासेन तस्या अपारं योगवैभवं व्याख्यातं भवति ॥ ४६ ॥

पत्युरपि देवतेवाऽभूत्सा भगवती ॥ ४७ ॥

एतां हि विग्रहरूपां रामः सिषेवे त्यागेऽपि ॥ ४८ ॥

सङ्कीर्त्या सीता पुण्यचरित्रा ॥ ४९ ॥

समुपास्या सीता कमलात्मिकाया अवतारः ॥ ५० ॥

तदिदं पञ्चशता सूत्राणां सीताव्याख्यानं भवति ॥। ५१ ॥

# कृष्णव्याख्यानम्

कृष्णं व्याख्यास्यामः ॥१॥

स विष्णोरष्टमोऽवतारः ॥२॥

उपनिषत्सु याज्ञवल्क्योद्दालकपिप्पलादप्रभृतय आचार्याः श्रूयन्ते ॥३॥

तेषां सर्वेषामप्येकः प्रतिमानं परमाचार्यो नः कृष्णः ॥४॥

गीतास्मृतेरयं ह्युपदेष्टा ॥५॥

गीताः खलूपनिषदां विवर्तः ॥६॥

असकृदावर्ती चन्द्रलोकात्प्रच्युतो वा पुरुषो भुविजन्मप्राङ्गसः सर्वः संसारी ॥७॥

स स्वेनैव कर्मणा प्रारब्धवान् भवति ॥८॥

अवतारस्तु लोकानुग्रहायावतीर्णो मुक्तपुरुषः ॥९॥

देवो वा ॥१०॥

तस्य सर्वेषु लोकेषु कामचारो भवतीति श्रुतेर्मुक्तस्य मानवलोकागमनमविरुद्धम् ॥ ११ ॥

देवस्य च ॥ १२ ॥

तस्य पृथग्जन्मसंसारहेतुभूतं नास्ति कर्म ॥ १३ ॥

तस्मात्कार्यार्थमवतीर्णस्य तस्य यज्ञेन प्रारब्धवत्त्वं स्यात् ॥ १४ ॥

यज्ञश्चेश्वरार्पितः सतां कर्मराशिः ॥ १५ ॥

क्रतुमयः पुरुष इति श्रुतिः ॥ १६ ॥

यथा संसारी कर्ममयः तथावतारो यज्ञमयः ॥ १७ ॥

यज्ञश्च क्रतुरेव ॥ १८ ॥

विशेषस्तु व्यष्टिसमष्टिभेदात् ॥ १९ ॥

यज्ञश्च विष्णुः ॥ २० ॥

अधियज्ञोऽहमेवास्मिन् देहे देहभृतां वरेति गीतावाक्यमत्र भवति ॥ २१ ॥

अक्षरं कूटस्थं च पृथङ्निर्दिश्य कृष्णो यज्ञमात्मानमाह ॥ २२ ॥

ज्ञापयति तेन यज्ञोऽवतारो न हिरण्यगर्भो न सूत्रात्मा न परंब्रह्म वेति ॥ २३॥

अस्मिन् देह इति सर्वसाधारणदेहान्वयेऽपि न विरोधः ॥ २४॥

संसारिणोऽपि क्रतुमयत्वात् ॥ २५॥

अधियज्ञशब्दस्य व्यष्टिवाचकत्वं संसारिपरत्वे ॥ २६॥

समष्टिवाचकत्वमवतारपरत्वे ॥ २७॥

एकत्र भक्तिः ॥ २८॥

अन्यत्र योगः ॥ २९॥

उभयत्रापि व्यवहारस्तुल्यः ॥ ३०॥

मुक्तपुरुषमिव क्वचिच्चन्द्रलोकादागतमपि यज्ञ आविशेत् ॥ ३१॥

नवमाहुतिक्रमतः सिद्धमपि क्वचित् ॥ ३२॥

क्वचिदुत्तमसङ्कल्पबलेन सिद्धम् ॥ ३३॥

नरनारायणयोर्मध्ये नारायणो नाम देवर्षिर्यदुकुलेऽवतीर्णस्तं यज्ञ आविशत् ॥ ३४॥

स कृष्ण इति वासिष्ठस्य मतम् ॥ ३५॥

पुरुषोत्तम एव लीलया मानवलोके कृष्णशरीरं धृतवानित्येके ॥ ३६॥

तेषु द्वौ दलौ ॥ ३७॥

तेजोंशेनेत्येकः ॥ ३८॥

माययेत्यपरः ॥ ३९॥

मूलपुरुषादवतारो नितान्तं न्यूनः प्रथमदलमते ॥ ४०॥

मूलपुरुषसदृश एवावतारो द्वितीयदलमते ॥ ४१॥

अपि च विभुः ॥ ४२॥

ईश्वराविशेषत्वात् ॥ ४३॥

अपि च मायोपाधिकः ॥ ४३॥

ईश्वराविशेषत्वात् ॥ ४५॥

अपि च सर्वज्ञः ॥ ४६॥

ईश्वराविशेषत्वात् ॥ ४७॥



अपि च सर्वशक्तः ॥ ४८॥

ईश्वराविशेषत्वात् ॥ ४९॥

अणवो अविद्योपाधिका अल्पज्ञा अल्पशक्तयश्च जीवाः ॥ ५०॥

कर्मभेदादवतारजीवभेदो वासिष्ठस्य मते ॥ ५१॥

सत्यप्येवं मतभेदे संसारिभ्योऽवतारविशिष्ट इति सर्वसम्मतम् ॥ ५२॥

तस्मादवतारः कीर्तनीय उपास्यश्च भवति ॥ ५३॥

कृष्णो जार इत्यापाततः कथावलोककानां भ्रान्तिः ॥ ५४॥

रासक्रीडावर्णने देवकीनन्दनं सत्यं कृष्णं मध्य एव गोपीनामसङ्गं गायन्ति ॥ ५५॥

गोपीभिः सहिताः कृष्णास्तु तन्मनः परिकल्पिताः ॥ ५६॥

मुख्यकृष्णमायाकल्पिता वा यथागोप्युद्देशम् ॥ ५७॥

कविकल्पिता वा भक्तानामीश्वरस्य च नायिकानायकभावेन हृदि स्थितेन ॥ ५८॥

अत्र भक्तानामेव गोपीत्वेन कल्पनम् ॥ ५९॥

भगवांश्च वदति वर्त एव च कर्मणीति ॥ ६०॥

कर्म चात्र सत्कर्म भवति ॥ ६१॥

जारः कथमात्मानं सत्कर्माणं वक्तुं शक्नुयात् ॥ ६२॥

गीताश्चेन्न प्रमाणं क्रीडाग्रन्थः कथं प्रमाणम् ॥ ६३॥

क्रीडाग्रन्थोऽन्यथा नेतुं शक्यते ॥ ६४॥

न गीतावचनम् ॥ ६५॥

तात्पर्यभङ्गापत्तेः ॥ ६६॥

कृष्णस्य परिग्रह एव षोडशसहस्रं नारीणां यदन्यत् ॥ ६७॥

परिग्रहबहुत्वेप्यसङ्गः कृष्णः ॥ ६८॥

अत एव तमस्खलितं ब्रह्मचारिणमाहुः ॥ ६९॥

सुखदुःखयोः समचित्तः कृष्णः ॥ ७०॥

योगेश्वरत्वात् ॥ ७१॥

अत एवाद्भुतकारी ॥ ७२॥

कृष्णे कालीशक्तिर्जजृम्भे यथा प्राहुस्तान्त्रिकाः ॥ ७३॥

कालोऽस्मि लोकक्षयकृत्प्रवृद्ध इति गीतावचनं चात्र भवति ॥ ७४॥

इति चतुःसप्तत्या सूत्राणां कृष्णव्याख्यानं भवति ॥ ७५॥

# तत्त्वसामान्यमीमांसा

**प्रथमः खण्डः**

एक एवासावात्मा तस्मादिदं सर्वं जायते जातं प्राणि यतो यतो वर्तते चरति वा ततस्ततस्तेषां स एव पुनरात्मान्तरं भवति यथा यतो यतो निक्षिप्यन्ते नीयन्ते वा घटास्ततस्ततस्तेषामाकाशोऽन्तरं भवत्यात्मा ह्याकाशवदखण्डः पूर्णः ॥१॥

तस्यैवमेकस्यैव सत आत्मनो द्वे नामनी भवतो वैभवभेदाद्यस्मिन्नेतानि सर्वाणि चराचराणि तं तादृगैश्वर्यं ईश्वरमाहुः सविता सोऽधिदैवतं य एतेषु सर्वेषु चराचरेषु तं तादृक् रहस्यं जीवं कथयन्ति सोऽन्तर्यामि सोऽध्यात्मम् ॥२॥

फलस्य फलस्यान्तर्बीजमिव जातस्य जातस्यान्तः खण्डशः खण्डशः पृथक् पृथगात्मा वर्तत इति यन्मन्यन्ते तदज्ञानं तदेतत्पश्यन् विश्वकर्मा भौवनो भगवानृषिरतद्विदः प्रत्याह न तं विदाथ य इमाजजाना-ऽन्यद्युष्माकमन्तरं बभूव नीहारेण प्रावृता जल्प्या चाऽसु तृप उक्थशासश्चरन्तीति ॥३॥

**द्वितीयः खण्डः**

यत्तेजस्तदहर्यत्तमः सा रात्रिर्यदभूर्यद्भवति यच्चभविष्यति तद्दृष्टेर्वा

नातिरिच्यतेऽथकालस्य किमात्मा व्यवहारमात्रे प्रतितिष्ठत्याहोस्विद्-अस्तीति मीमांसा भवत्यत्रैतदाचक्ष्महे दृष्टेः कालं यत् पृथग्गणयन्ति तं नादृत्यं वैद्युतोऽग्निः कालस्तं यम इति चाचक्षते तस्य प्रणव आत्मा पुरुषस्य दृष्टिर्वा एषा यत्प्रणवः ॥ ४॥

या पुरुषस्याखण्डा प्रतीची दृष्टिः सा पराची भूत्वा खण्डशः सम्पद्यते विश्रान्ताऽऽनन्द एवं तस्यास्त्रीन् प्रकारान् पश्यामः संसारिणि पराचीं साक्षात्कुर्वति प्रतीचीमसिते विश्रान्तां तासामेतान्यपराणि नामत्रिकाणि भवन्ति प्रज्ञानं विज्ञानं मौनं च सङ्गो योगस्त्यागश्च व्यायामो व्याप्तिरुपरतिश्च द्वैतभावः सर्वभावः शेषभावश्चेति ॥ ५॥

तासामेकैकां पुनर्वैभवभेदाच्चतुर्धा चतुर्धा व्यवहरन्ति स्थितिर्जागरितं कर्म भोगश्चेति पराचीं सर्गः स्वप्नस्तपः सायुज्यं चेति प्रतीचीं प्रलयो निद्रा निर्वेदो मुक्तिश्चेति विश्रान्ताम् ॥ ६॥

अथ कथमियं दृष्टिः काल इति मीमांसा भवत्यत्रैतदाचक्ष्महेऽहर्वा एतद्यत्पराची दृष्टिः सन्ध्या वा एषा यत्प्रतीची रात्रिर्वा एषा यद्विश्रान्ता विज्ञानधारायां यत्पूर्वं पूर्वं तदभूद्यत्साध्यः किं तद्भवति यद्भावि तद्भविष्यति द्विधाप्येवं कालस्य त्रित्वं व्याख्यातमितोऽन्यो व्यवहारो भाक्तः ॥ ७॥

अथ शब्दः प्रणवो ज्ञानं दृष्टिरनयोः कथमैकात्म्यं स्यादिति मीमांसा भवत्यत्रैतदाचक्ष्महे यच्छब्दतो ज्ञानं पृथग्गणयन्ति तन्नादृत्य शब्दस्य द्वौ प्रकारावव्यक्तोऽव्यक्तश्चेति यदव्यक्तशब्दः स प्रणवस्ततो ज्ञानं नातिरिच्यते वयं ह्यन्तरव्यक्तं शब्दायामहे यज्जानीम इत्यध्यात्ममथा-धिदैवतमसावव्यक्तं शब्दायत इत्येव यत्तपतीत्यत एव छन्दोगा उद्यन्वा एष प्रजाभ्य उद्गायतीति व्याचक्षते ॥ ८॥

सोऽयममुष्य शब्दः सर्वा अव्यक्ता भूतमात्रा जरयन् व्यञ्जयति व्यक्ताश्चोपभुञ्जन् नानाकृतीनि चराचराण्युत्पादयति जन्यो वा एता यदव्यक्ता भूतमात्रास्तासाममुष्य शब्दो जारो जन्यो वा एता यद्व्यक्ता भूतमात्रास्तासाममुष्य शब्दः पतिर्यदखण्डो विश्वस्मिन्नस्ति यच्च शरीरे शरीरे पराङ्मुखो भूत्वा खण्डशः सम्पद्यते तदमुष्यशब्दो जातो जनित्वं च तदेतत्पराशरः शाक्त्यो भगवानृषिर्दर्शयति यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनानामिति ॥ ९॥

## तृतीयः खण्डः

आत्मा कालश्च व्याख्यातौ देशं व्याख्यास्यामो देशो वा एष यल्लोकः पृथिवीलोकोऽन्तरिक्षं लोको द्यौर्लोकस्त्रयाणामेषां लोकानामदिति-रित्येकमभिधायकं पदं भवति ॥ १०॥

अयं लोकः पृथिवी तस्याः सर्वाण्यण्डानि पिण्डानि चात्मा सप्तानां ग्रहाणामेषा भूमिः सप्त वा एते ग्रहा भवन्ति क्षोणी मङ्गलो बुधः शुक्रः शनिर्बृहस्पतिश्चन्द्रसप्तमा इत्यध्यण्डमथाधिपिण्डं सप्तानां धातूनामेषा भूमिः सप्त वा एते धातवो भवन्ति त्वग्रक्तं मांसं मेदोऽस्थि मज्जा शुक्र सप्तमाः ॥ ११॥

मध्यमो लोकोऽन्तरिक्षं तस्यान्तरालमात्मा वैद्युतस्याग्नेरेषा भूमिरित्य-धिभूतमथाध्यात्मप्राणस्यैषा भूमिः ॥ १२॥

असौ लोको द्यौस्तस्यास्तेज आत्मा तेजो वा एतद्यदमुष्यमण्डल-मित्यधिदैवतं यथाध्यात्मं तत्तेजो यत्तपः प्रज्ञानस्यैषा भूमिः ॥ १३॥

यो विषयः स लोको यो लोको द्यौरन्तरिक्षं पृथिवी चेति त्रिप्रकारः सादितिर्यददितिः पृथिवी तदण्डानि पिण्डानि चादितिर्यत् पिण्डा-ण्यदितिस्तन्मातापितरौपुत्रश्चादितिर्विश्वेदेवाः पञ्चजनाश्चादितिरेवं जातं जन्यं च दृश्यमदितिस्तदेतद्राहूगणो गोतमो भगवानृषिर्दर्शयति अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वमिति ॥१४॥

## चतुर्थः खण्डः

नानाविधस्यास्य भव्यस्य प्रकृतिभूतानि भूतानि यानि त्रीणि प्रदर्शितानि तेषां किमस्त्येक आत्मा किं वा पृथगेवैतानीति मीमांसा भवत्येत् त्रयी तदाचक्ष्महे नानाविधस्यास्य भव्यस्य प्रकृतिभूतानामस्त्येक आत्मा स सूर्यः ॥१५॥

यद्दृश्यते तज्ज्योतिर्यत्पश्यति तज्ज्योतिर्यद्दर्शनं तच्च ज्योतिस्तस्मात् त्रयाणामेषां भूतानामेकात्मता भवति सूर्यो वा एष यज्ज्योतिस्तस्यैव ब्रह्मेति सादितिः परादेवतेत्यन्यानि नामधेयानि भवन्ति ॥१६॥

कथं चेतनाचेतनयोरेकात्मत्वं परस्परविविक्तावेतौ हि दृश्येते चेतनः पश्यत्येव न दृश्यते परो दृश्यत एव न पश्यतीति भ्रातरः पृच्छन्त्यत्रैतदाचक्ष्महे नेदमुभयमतिविलक्षणं यद्दृश्यत्वं द्रष्टृत्वं चेति दृष्टिगोचरत्वमनयोर्हि सामान्यं पश्यामो विषयो युष्मद् दृष्टिगोचरो विषय्यस्मद् दृष्टिगोचरः ॥१७॥

दृष्टिगोचरस्य वस्तुन एकस्य कथं युष्मदस्मभ्यां विशेषो भवतीति

मीमांसा भवत्यत्रैतदाचक्ष्महे यथैकस्य मध्ये तिष्ठन् त्वा दृष्ट्या विभागः क्रियते त्वमेषोऽहमेष इति ॥ १८ ॥

यथा समुद्रे जले कुतश्च तरङ्गश्चलितो भूत्वा कुत्रापि विलीयते ततश्चलितो भूत्वेतः प्राप्त इति वदन्ति जलाज्जलं चलितं भूत्वा जलमेव प्राप्त इति सत्यं तथा संसारे कुतश्चित् चलिता दृष्टिः कुत्रापि विश्राम्यति ततश्चलिता भूत्वेतः प्राप्तेति वदन्ति ज्योतिषो ज्योतिश्चलितं भूत्वा ज्योतिरेव प्राप्तमिति सत्यम् ॥ १९ ॥

इदमुक्तं भवति सूर्यः सर्वेषां रश्मीनां समष्टिः सूर्यः सर्वेषां जागरिते सुषुप्तौ स्वप्ने च चक्षुः सूर्यः सर्वेषां दर्शनं दिवं पृथिवीमन्तरिक्षं च व्याप्तमेवं सूर्यश्चेतनाचेतनयोरात्मा तदेतत् कुत्स आङ्गिरसो भगवानृषिर्दर्शयति चित्रं देवानामुदकादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्चेति सैषा तत्त्वसामान्यमीमांसा चतुर्भिः खण्डैर्विंशत्या वर्णकानां च निबद्धा य एतामधीते स सत्यान्न च्यवते सत्यान्न च्यवते ॥ २० ॥

॥ तत्त्वसामान्यमीमांसा समाप्ता ॥




Kavyakantha Ganapati Muni
A photo with his autograph



Kavyakantha Ganapati Muni and his Family
A Sketch by Madam Jane Adams

# तत्त्वमीमांसा

## प्रथमोऽध्यायः (शब्दप्रमाणविचारः)

### प्रथमः पादः

### १. वेदप्रामाण्याधिकरणम्

वेदाः प्रमाणमकृतकत्वाज्जैमिनेः ॥१॥

ईश्वरवाक्यत्वादाचार्याणाम् ॥ २॥

आप्तवाक्यत्वात्पतञ्जलेः ॥ ३॥

धर्मवचनात्कणादस्य ॥ ४॥

अप्रमाणमप्येकेषां कृतकत्वात्काव्यालापवत् ॥ ५॥

न कर्तुरनुपलब्धेरिति चेन्न मधुच्छन्दप्रभृतीनामुपलब्धेः ॥६॥

प्रवचनादाख्येति चेन्नासिद्धत्वान्नित्यत्वस्य ॥ ७॥

नित्यत्वसिद्धावाख्यायागौणत्वं गौणत्वसिद्धौ नित्यत्वमिति हेत्वान्तरेतराश्रयः ॥ ८ ॥

श्रुतेर्नित्यमिति चेदनित्यत्वमपि ॥ ९ ॥

इतरेतराश्रयश्च नित्यत्वप्रमाणत्वयोः ॥ १० ॥

वाक्यानि हि ॥ ११ ॥

नेश्वरस्यावरस्तुतेः ॥ १२ ॥

पदार्थमिति चेत्सामान्याभिप्रायत्वान्न व्यक्तिनिर्देशः ॥ १३ ॥

इतराख्यातश्च ॥ १४ ॥

तत्काल कथायोगादेव ॥ १५ ॥

भाषाभेदात् ॥ १६ ॥

न धर्ममेव ब्रुवन्ति हिंसायाश्चोपदेशात् ॥ १७ ॥

अत एव नाप्तवाक्यानि ॥ १८ ॥

व्याहतार्थत्वादितरेतरविरुद्धत्वाच्च ॥ १९ ॥

प्रमाणमेव तु दर्शनत्वात् ॥ २० ॥

## द्वितीयपादः

### २. दर्शनाधिकरणम्

दर्शनं यत्समष्टेः करणेन स्वकीयेनेव स्वहृदये परत्र परदर्शने वा गुप्तमर्थमृषिः पश्यति ॥१॥

यथा दृष्टस्यानुवादो वेदः ॥२॥

ज्ञानस्य शब्दः कथमनुवाद इति चेदविशेषात् ॥३॥

अव्यक्तं शब्दायत इत्येव यज्जानातीति ॥४॥

समष्टेः करणं व्यष्टेः स्वं स्यात् तपोबलाद्यथा परयत्नाद्योगनिद्रायाम् अधुनालोके ॥५॥

प्रसिद्धिरत उपर्युत्तरम् ॥६॥

काणादादिषु दर्शनव्यवहारो भाक्तः ॥७॥

### ३. वेदनित्याधिकरणम्

वेदाः प्रणवेऽभिव्यक्तिलिङ्गादृषिभ्यः प्रागपि ॥८॥

" ऋचो अक्षरे परमे व्योमन्निति" दीर्घतमसो दर्शनात् ॥९॥

विशेषवचनं प्रकृतत्वान्नेतरव्यवच्छेदाय ॥ १० ॥

वाचा विरूपनित्ययेति विरूपस्य दर्शनाच्च ॥ ११ ॥

प्रणवः समष्टिज्ञानान्नातिरिच्यते ॥ १२ ॥

शब्दज्ञानयोरैकात्म्यमुक्तम् ॥ १३ ॥

अविभक्ततया समष्टौ विभक्ततया दर्शनेष्विति विवेकः ॥ १४ ॥

अभिव्यक्तौ सन्निकृष्टशब्दोपाधिकत्वमिष्टं यथा स्मृतौ लोके ॥ १५ ॥

एतेन भाषाभेदो व्याख्यातः ॥ १६ ॥

अर्थाः सन्निकृष्टा विप्रकृष्टाश्च जिज्ञासानुसारात् ॥ १७ ॥

एतेन तात्कालिककथायोगो दुर्विज्ञेयार्थयोगश्च व्याख्यातौ ॥ १८ ॥

समष्टिकरणस्य सर्वदेशकालव्यापित्वान्नागतिसंशयः ॥ १९ ॥

काव्यानि वेधस उच्यन्ते करणस्य तदीयत्वात् ॥ २० ॥

ऋषीणां दर्शनस्य तदीयत्वात् ॥ २१ ॥

## तृतीयः पादः

### ४. वेददोषपरिहाराधिकरणम्

तन्नित्यानां नियमायोपदिशन्ति यज्ञेषु हिंसाम् ॥ १॥

तज्जिन्नवृत्तानां हिंसाकल्पे पक्षपात उपदेशमूलाज्ञानजः पूर्वाचारशरणः ॥ २॥

व्याहत्याभासास्तात्पर्यपर्यन्तमगतेः ॥ ३॥

नेतरेतरविरोधः क्रियाकल्पेष्वधिकारिभेदात् ॥ ४॥

तत्त्वाख्यानेष्वर्थविचारात् ॥ ५॥

नित्यत्वेनानित्यत्वं व्याख्यायि ॥ ६॥

ऋषिवाक्यत्वेनावरस्तुतिः ॥ ७॥

करणस्य दिव्यत्वेन दर्शनभ्रान्तिः ॥ ८॥

### ५. मन्त्रशास्त्रताधिकरणम्

न मन्त्राः शास्त्रमादेशो हि शास्त्रम् ॥ ९॥

अत्राप्यादेशा इति चेत् शास्त्रमशास्त्रं च यथाभागम् ॥ १०॥

अनादेशोऽपि शास्त्रमादेशशेषत्वाज्जैमिनेः ॥ ११ ॥

अविशेषेण दर्शनत्वाद्वासिष्ठस्य नादेशोप्यतथात्वे दर्शनं हि शास्त्रम् ॥ १२ ॥

अयोगान्नेति चेन्न देवतामहिमादिबोधकत्वात् ॥ १३ ॥

न प्रयोजनवत्त्वं नाभ्युदयोपायत्वात् ॥ १४ ॥

मूलप्रमाणत्वाच्च ॥ १५ ॥

६. मन्त्रशक्त्यधिकरणम्

क्रियाङ्गं यज्ञेषु विनियोगात् ॥ १६ ॥

उपस्थानेषु जपेषु च ॥ १७ ॥

ज्ञानायैव स्वार्थे प्रामाण्योपपत्तेरेकेषाम् ॥ १८ ॥

ज्ञानं च क्रियाङ्गमिति चेन्नासमन्वयात्प्रायः ॥ १९ ॥

उभयधातुशक्तेः पावकत्वे बोधकत्वे च ॥ २० ॥

अधिकारिसापेक्षो मुख्योपसर्जनभावः ॥ २१ ॥

विशुद्धिव्यभिचारादपावकत्वमिति चेत्सभक्तिश्रद्धाविरहात् ॥ २२ ॥

दम्भदोषाच्च ॥ २३ ॥

## चतुर्थः पादः

### ७. उपनिषत्सङ्ख्यानाधिकरणम्

मन्त्रब्राह्मणयोर्दश प्रसिद्धा उपनिषदः ॥ १ ॥

श्वेताश्वतराणां जाबालानां चोपनिषत् ॥ २ ॥

कौषीतकिब्राह्मणोपनिषच्च ॥ ३ ॥

वृद्धोदाहृताः काश्चिन्नोपलभ्यन्ते ॥ ४ ॥

अन्यास्त्वदर्शसन्दिग्धाः प्रायो गतिभेदात् ॥ ५ ॥

### ८. व्याख्यानदर्शनाधिकरणम्

कानिचित् ब्राह्मणानि निरपेक्षं प्रमाणं तदुक्तं ऋचेत्वादिशब्देभ्यः ॥ ६ ॥

स तु पुरस्ताद्व्याख्यानानि हि तानि ॥ ७ ॥

व्याख्यानदर्शनेषु मन्त्रार्थस्यैव विषयत्वान्न प्रामाण्ये सापेक्षत्वम् ॥ ८ ॥

### ९. गौणवेदाधिकरणम्

भारतं प्रमाणमेकेषां पञ्चमवेदत्वात् ॥ ९ ॥

पञ्चमवेदत्वं त्वस्य भाक्तम् ॥ १० ॥

एतेन रामायणस्य गुप्तवेदत्वं व्याख्यातम् ॥ ११॥

चतुःसहस्त्रप्रबन्धादेश्च भाषा वेदत्वम् ॥ १२॥

उपनिषत्वं भिन्नगीतानां च ॥ १३॥

## १०. स्मृत्यधिकरणम्

स्मृतिर्लिङ्गं शब्दस्य ॥ १४॥

शब्द एव वाक्यत्वादिति चेन्नादर्शनत्वात् ॥ १५॥

अदृष्टमूलात्र पक्षः ॥ १६॥

दृष्टमूलात् दृष्टान्तः ॥ १७॥

मूलं साध्यम् ॥ १८॥

अनुशासनत्वं हेतुः ॥ १९॥

लोभादिदोषदर्शनाप्रत्यक्षविरोधाद्वा स्मर्तुरश्रद्धेयत्वं दोषः ॥ २०॥

स्मर्तृणां नाम्ना काश्चिदुपलभ्यन्ते ॥ २१॥

काश्चिन्मूलदृशां नाम्ना एषामितराणि दर्शनानि मन्त्रेषु ॥ २२॥

अन्तःसाक्षिण उपदेशं स्मृतिमपरे मन्यन्ते अपरे मन्यन्ते ॥ २३ ॥

॥ इति शब्दप्रमाणविचारोऽध्यायः ॥

# द्वितीयोऽध्यायः

**प्रथमः पादः**

**११. आत्माधिकरणम्**

एक एवात्मा योऽस्य सविता ॥ १ ॥

परितः पूर्णः ॥ २ ॥

पचति भुवनान्यजस्रम् ॥ ३ ॥

प्राणे तु स्फुरति ॥ ४ ॥

तमेकमेव सन्तं वैभवभेदात् त्रेधा प्राहुः ॥ ५ ॥

पक्तारमीशम् ॥ ६ ॥

हृदये स्फुरन्तं विराजम् ॥ ७ ॥

तमेतं पश्यन्न तद्विदः प्रत्याह न तं विदाथेति विश्वकर्मा ॥ ८॥

तत्त्वमसीति पुत्रायोपदिशत्युद्दालकः ॥ ९॥

मण्डले हिरण्यगर्भम् ॥ १०॥

अमुष्मिन्त्सर्वे प्रतितिष्ठन्ति लोकाः ॥ ११॥

हृदयमण्डले पिण्डाण्डप्राणाभ्यां न व्यतिरिच्येते ॥ १२॥

फलस्यान्तर्बीजमिव न स देहस्यान्तः ॥ १३॥

जलस्यान्तर्लवणमिव तथा दृष्टान्तः श्रवणात् ॥ १४॥

स्फुरति एवास्य सङ्कल्पाः ॥ १५॥

एवं मनोमयः प्राणशरीरो भारूप आत्मा व्याख्यातः ॥ १६॥

## द्वितीयः पादः

### १२. कालस्वरूपाधिकरणम्

तेजोऽहः ॥ १॥

तमो रात्रिः ॥ २॥

तेजस्तमसोः सन्धिः सन्ध्या ॥ ३॥

भूतं भवद्भावि च चरित्रान्नातिरिच्यन्ते ॥ ४॥

अथ न कालस्य पृथगात्मा ॥ ५॥

अस्ति तु ॥ ६॥

आत्मनो दृष्टिः कालः ॥ ७॥

दृष्टिर्ज्ञानादव्यक्ताच्छब्दान्नातिरिच्यते ॥ ८॥

## १३. कालभेदाधिकरणम्

अन्तर्मुखी प्रतीची ॥ ९॥

बहिर्मुखी पराची ॥ १०॥

विश्रान्ता शान्तिः ॥ ११॥

तासामेतान्यपराणि नामत्रिकाणि ॥ १२॥

प्रज्ञानं विज्ञानं मौनं च ॥ १३॥

योगः सङ्गस्त्यागश्च ॥ १४॥

व्याप्तिर्व्यायाम उपरतिश्च ॥ १५॥

तासामेकैकां पुनर्वैभवभेदाच्चतुर्धा चतुर्धा व्यवहरन्ति ॥ १६॥

स्थितिर्जागरितं कर्म भोगश्चेति पराचीम् ॥ १७॥

सर्गः स्वप्नस्तपः सायुज्यं चेति प्रतीचीम् ॥ १८॥

प्रलयो नि.द्रा सम्प्रसादो मुक्तिश्चेति विश्रान्ताम् ॥ १९॥

अहर्वा एतद्यत्पराची ॥ २०॥

सन्ध्या वा एषा यत्प्रतीची ॥ २१॥

रात्रिर्वा एषा यद्विश्रान्ता ॥ २२॥

भूतं भवद्भावि च विज्ञानधारा ॥ २३॥

एवं कालस्य द्विधापि त्रित्वं व्याख्यातम् ॥ २४॥

इतोऽन्यो व्यवहारो भाक्तः ॥ २५॥

### १४. यमाधिकरणम्

तमेतं कालमग्निं यममाहुः ॥ २६॥

अयमेव पक्तुः पाचकशक्तिः ॥ २७ ॥

जरयत्यव्यक्ता भूतमात्राः ॥ २८ ॥

जन्यो वा एता यदव्यक्ता भूतमात्राः ॥ २९ ॥

व्यक्ताश्चोपभुञ्जन्नानाकृतीनि चराचराण्युत्पादयन्ति ॥ ३० ॥

जन्यो वा एता यदव्यक्ता भूतमात्राः ॥ ३१ ॥

अखिलानुभूतिरूपत्वाद्भूतभव्यात्मा ॥ ३२ ॥

तदेतत्सर्वं पश्यन् पराशरो यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनानामित्याह ॥ ३३ ॥

शक्तिशक्तिमतोरविशेषाज्जारत्वपतित्वसङ्गतिः ॥ ३४ ॥

## तृतीयः पादः

### १५. लोकाधिकरणम्

विषयो लोकः ॥ १ ॥

अयं लोकः पृथिवी ॥ २ ॥

अधिपिण्डं तु शरीरम् ॥ ३॥

तेजोऽबन्नानां एषा समष्टिः ॥ ४॥

पञ्चानामिति चेन्न त्रिवृत्करणोपदेशात् ॥ ५॥

द्वितीयश्चन्द्रमाः ॥ ६॥

अधिपिण्डं तु मनः ॥ ७॥

तृतीयोऽसावादित्यः ॥ ८॥

अधिपिण्डं तु प्राणः ॥ ९॥

द्वितीयतृतीययोस्त्रिवृत्त्वमनेन लोकेन व्याख्यातम् ॥ १०॥

मनसो लोकत्वं स्वप्ने सर्वप्रत्यक्षम् ॥ ११॥

प्राणस्य समाधौ योगिप्रत्यक्षमन्वयतः ॥ १२॥

निद्रायां सर्वप्रत्यक्षं व्यतिरेकतः ॥ १३॥

तथाह्यामनन्ति दहरविद्यायां छन्दोगाः ॥ १४॥

दहरपुण्डरीकं हृदयान्नातिरिच्यते ॥ १५॥

हृदयप्राणयोरैकात्म्यमुक्तम् ॥ १६ ॥

१६. आदित्याधिकरणम्

सर्वलोकचित्रभित्तिराकाशम् ॥ १७ ॥

अदितिर्वा एषा यदाकाशः ॥ १८ ॥

सा प्रकृतिस्तेजोऽबन्नानाम् ॥ १९ ॥

तथाह्युपदिशति प्रवाहणः ॥ २० ॥

सतः प्रकृतित्वश्रुतिगोप इति चेन्नाव्यतिरेकात् ॥ २१ ॥

तत्सम्भवश्रुतेर्गौणत्वं बादरायणः ॥ २२ ॥

परिहरत्येव प्रतिज्ञाया हानिं नोत्पत्तिं विधत्ते ॥ २३ ॥

अव्यतिरेकश्च हेतुरुपन्यस्तो नासाध्यः ॥ २४ ॥

हेतुनाप्यनन्यथा सिद्धेरुत्पत्तिप्रतिषेध इति चेन्नाभेदार्थत्वात् ॥ २५ ॥

छन्दोगानामेव सर्गक्रमस्य प्रकृतित्वात् ॥ २६ ॥

अमृतशब्दस्यापरिहृतत्वात् ॥ २७ ॥

यावद्विभागं तु विकार इति प्रत्युदाहरणम् ॥ २८॥

अविभाज्यत्वमोतप्रोतश्रुतेरच्छेद्यत्वाच्च ॥ २९॥

मातरिश्वनो नित्यत्वापत्तिरिति चेत्तदिष्टम् ॥ ३०॥

स यमान्नातिरिच्यते ॥ ३१॥

शिष्टभाष्यातिक्रम इति चेच्छिष्टतमसूत्रातिक्रमः ॥ ३२॥

मरुतो मातरिश्वनस्तरङ्गाः प्रज्ञानस्येव विज्ञानानि ॥ ३३॥

अतो न तेषां नानात्वादुत्पत्तिप्रलयाभ्यां च मातरिश्वनो विकारत्वं विज्ञानानामिव प्रज्ञानस्य ॥ ३४॥

पक्तुर्मातरिश्वा स्फुरतः प्रज्ञानमिति विवेकः ॥ ३५॥

सर्वलोकप्रकृतित्वाद्भूतभव्यात्मिका ॥ ३६॥

तदेतत्पश्यन्नदितिर्जातमदितिर्जनित्वमित्याह गोतमः ॥ ३७॥

## चतुर्थः पादः

### १७. सदधिकरणम्

आत्मशक्तिप्रकृतयस्त्रयः पदार्था विलक्षणत्वात् ॥ १॥

नत्वेकरूपत्वात् ॥ २॥

ज्योतिस्तद्रूपम् ॥ ३॥

पश्यति दृष्टिर्दृश्यते च ॥ ४॥

त्रिकस्यैकं वाचकं सदिति ॥ ५॥

पश्यत्सदात्मा ॥ ६॥

दर्शनं सच्छक्तिः ॥ ७॥

दृश्यं सदविकार्यं प्रकृतिः ॥ ८॥

विकार्यं जगत् ॥ ९॥

तदेतत्पश्यंत्सूर्य आत्माजगतः तस्थुषश्चेत्याह कुत्सः ॥ १०॥

एकं सद्विप्रा बहुधा वदन्तीति दीर्घतमाः ॥ ११॥

ज्योतिर्वा एतद्यत्सूर्यः ॥ १२॥

ज्योतिः सदित्यनर्थान्तरम् ॥ १३॥

अनुभूतिं ज्योतिर्ब्रूमः ॥ १४॥

अनुभूतेस्त्रिरूपत्वात् त्रिकस्यैकपदार्थतोक्ता ॥१५॥

अविभाज्यांशत्वान्नानेकत्वशङ्का नानेकत्वशङ्का ॥१६॥

## तृतीयोऽध्यायः

### प्रथमः पादः

### १८. सर्वसिद्धान्तसङ्ग्रहः

अनुभूतिः सत्या ॥१॥

भोक्तृभोग्यभोगरूपा सा ॥२॥

न विभाज्यास्त्रयोंशा एते ॥३॥

तस्मादनुभूतेरेकरूपता त्रिरूपता च ॥४॥

आदिर्भोक्ता परमेश्वरः ॥५॥

आदिभोग्यं खम् ॥६॥

आदिर्भोगस्तपः ॥७॥

तपो वायोर्नातिरिच्यते ॥८॥

परमेश्वरः सत्यात् ॥ ९॥

खममृतात् ॥ १०॥

त्रिभिरेतैरुपक्रमोपसंहारौ तैत्तिरीयाणामुपनिषदि शिक्षायाम् ॥ ११॥

वाय्वाकाशयोरुत्पत्तेर्गौणत्वमुक्तम् ॥ १२॥

**द्वितीयः पादः**

परमेश्वरस्य खे तपसा तेजोऽजायत ॥ १॥

रूपमात्रं तेजः केषाञ्चित् ॥ २॥

तेजो गुण एव रूपम् ॥ ३॥

ज्वलनमपरेषाम् ॥ ४॥

तेजः क्रियैव ज्वलनम् ॥ ५॥

रूपज्वलनयोराश्रयो वासिष्ठस्य ॥ ६॥

ते तत्र कदाचिद्विद्यते कदाचिन्न ॥ ७॥

उद्दीपककारणभावाऽभावाभ्याम् ॥ ८॥

वायोर्नातिरिच्यत इति चेत्तदिष्टमभिव्यक्तिभेदान्नामभेदो मूलं त्वेकम् ॥ ९॥

खतेजसोस्तपसाऽऽपः ॥ १०॥

खतेजोऽप्सु तपसान्नम् ॥ ११॥

तेजोऽबन्नानि विश्वस्मिंत्संयुक्तान्येव दृश्यन्ते ॥ १२॥

बाहुल्यादेकसंज्ञा ॥ १३॥

## तृतीयः पादः

तेजोऽबन्नानां तप्यमानानां साराः सौराणि मण्डलानि ॥ १॥

तेषु स्वशक्त्या वायुना स्फुरति परमेश्वरः ॥ २॥

पृथक् ब्रह्मण्डानां विधातारस्ते हिरण्यगर्भाः ॥ ३॥

अनेकहृदयो वा तथा परमेश्वरः ॥ ४॥

अनन्तरं पृथिव्यादयो गोलाः सम्पद्यन्ते कालवशात् ॥ ५॥

गोलेषु तप्यमानैस्तेजोऽबन्नैर्विविधानि चराणि ॥ ६॥

तेषु मानुषप्राणः श्रेष्ठः ॥ ७॥

स सौरमण्डलमिव ॥ ८॥

तेषु च स्फुरतीश्वरः ॥ ९॥

पृथक् पिण्डानामधिष्ठातारस्ते ॥ १०॥

अनेकहृदयो वा परमेश्वरः ॥ ११॥

## चतुर्थः पादः

प्राण एव स्थानभेदादन्ये प्राणाः ॥ १॥

स एव सङ्कल्पानामायतनं तत एवाभिव्यक्तिर्मनसि ॥ २॥

स कर्मभिः क्षणे क्षणे गुणतो विपरिणम्यते ॥ ३॥

न स्वरूपतः ॥ ४॥

तस्यैवोत्क्रान्तिगतिश्च ॥ ५॥

सादिः ॥ ६॥

तस्य सादित्वाज्जीवस्यापि सादित्वमौपाधिकम् ॥ ७॥

एतेन कर्मणामुपाधीनां च परमतमनादित्वं व्याख्यातम् ॥ ८॥

तस्यात्मलाभः पितुः प्राणात् ॥ ९॥

दीपादिव दीपस्य ॥ १०॥

आगतिश्चेत्स सत्यस्यादेवेशः ॥ ११॥

श्रुतेः सत्यैवेति चेदश्रुतिरपि ॥ १२॥

गतस्य यावत्सम्पत्तिगतिरेवेत्येकं लक्षणम् ॥ १३॥

पुण्यपापज्ञानाज्ञानतपोमान्द्यनिरर्थता प्रसक्तिरिति चेच्छीघ्रविलम्बाभ्यां तत्सार्थकता ॥ १४॥

अन्यस्याप्येवम् ॥ १५॥

नित्यबन्धवादिनो नास्तिकेभ्योऽपि खलाः ॥ १६॥

गतस्यागतिर्भूयस्तपसो पूर्णत्वादित्यन्यलक्षणम् ॥ १७॥

आगतस्याविष्टस्य पित्र्यस्य वा प्राणस्य प्रकृतिः पूर्वकर्मविघ्ना-परिणामस्त्वधुनातन कर्मायत्तः ॥ १८॥

फलेषु दृष्टहेतुत्वान्नादृष्टकल्पनं नादृष्टकल्पनम् ॥ १९॥

॥ इति तत्त्वमीमांसा ॥

# प्रमाणपरीक्षा

## प्रथमः खण्डः

अथातः प्रमाणपरीक्षा ॥ १॥

अक्षजं व्यष्टिज्ञानं प्रत्यक्षं तदेकं प्रमाणम् ॥ २॥

अत्र ज्ञाता साक्षी ॥ ३॥

तदक्षभेदात्पञ्चविधम् ॥ ४॥

स्पर्शरसगन्धानामनुभूतिकाले केवलम् ॥ ५॥

अनुवादे स्मरणे च शब्दरूपम् ॥ ६॥

रूपस्यानुभूतौ स्मरणे च ॥ ७॥

त्रिष्वपि शब्दस्यैकरूपम् ॥ ८॥

शब्दोऽत्र नादपर्यायो न नादवत्पर्यायः ॥ ९॥

बलवदुत्तरमन्यथा ज्ञानं पूर्वज्ञानप्रामाण्यस्यापवादः ॥ १०॥

अपोदितप्रामाण्यं ज्ञानं भ्रमः ॥ ११ ॥

संशयेन कस्यचित्प्रामाण्यमनिर्धारितत्वात् ॥ १२ ॥

पूर्वोत्तरयोस्तुल्यबलत्वे संशयवत् ॥ १३ ॥

**द्वितीयः खण्डः**

प्रत्यक्षेण लिङ्गेनेतरस्य प्रत्ययोऽनुमानं तदन्यत्प्रमाणम् ॥ १ ॥

नियमेन तदेकसहवासि द्रव्यं द्रव्यान्तरस्य लिङ्गम् ॥ २ ॥

एवं गुणो गुणान्तरस्य ॥ ३ ॥

कर्मणश्च ॥ ४ ॥

कर्मगुणस्य ॥ ५ ॥

नित्यकारणं कार्यं कारणस्य ॥ ६ ॥

नियतोत्तरावस्था पूर्वस्याः ॥ ७ ॥

भूतकारणावस्थाप्रत्ययाभ्यां भाविकार्यावस्थाप्रत्ययौ व्याख्यातौ ॥ ८ ॥

कस्यचिद्विप्रकर्षोऽन्यस्य नियमेन दूरीकर्तुः ॥ ९ ॥

विप्रकर्षश्च देशतः कालतो वा ॥ १० ॥

अनुभूतस्य सन्निकर्ष इव व्यावृत्तस्य विप्रकर्षश्च प्रत्यक्षः ॥ ११ ॥

प्रमितेः प्रागभिलषितस्यैव व्यावृत्तिः ॥ १२ ॥

कस्यचित्सन्निकर्षोऽन्यस्य नियमेन बाध्यस्य भूतस्य ॥ १३ ॥

चेष्टानियतनिमित्ता निमित्तस्य ॥ १४ ॥



एवं लिङ्गान्तराण्यप्यूह्यानि ॥ १५ ॥

## तृतीयः खण्डः

श्रद्धेयस्य साक्षिणोऽनुवादकं वाक्यमाप्तवाक्यम् ॥ १ ॥

तदन्यत्प्रमाणमेकेषाम् ॥ २ ॥

उपजीव्ये वा तस्य सङ्ग्रहः ॥ ३ ॥

तदपवादोऽन्यथा साक्षात्प्रत्यक्षं लिङ्गं च ॥ ४ ॥

यथोक्तसाक्षिविप्रतिषेधे संशयवत् ॥ ५ ॥

11 ऐतिह्यमाप्तवाक्यान्नातिरिच्यते ॥ ६ ॥

तथापि तत्रासस्याज्ञातत्वात्तदन्यत्प्रमाणमेकेषाम् ॥ ७॥

यथा तात्पर्यं तस्य प्रामाण्यं न यथा श्रुतमिति वासिष्ठः ॥ ८॥

सादृश्यं स्मृतोपमेयसदृशत्वेन प्रसिद्धस्य लिङ्गं तदुपमानमन्यत् प्रमाणमेकेषाम् ॥ ९॥

अनुमानविशेषो वा ॥ १०॥

पीनो देवदत्तो दिवा न भुङ्क्त इत्यादौ रात्रौ भुङ्क्त इत्यादि प्रतीतिरर्थापत्ति तदन्यत्प्रमाणमेकेषाम् ॥ ११॥

अनुमानविशेषो वा ॥ १२॥

अनुपलब्धिरभावे प्रमाणमित्येके ॥ १३॥

प्रमितमभिलषितादन्यदित्येव तत् ॥ १४॥

## चतुर्थःखण्डः

दिव्यदृष्टिजं ज्ञानमपरोक्षं तदितरत्प्रमाणम् ॥ १॥

प्रत्यक्षान्नातिरिच्यत इत्येके ॥ २॥

अन्यद्विलक्षणत्वाद्वासिष्ठस्य ॥ ३॥

वेद आप्तवाक्यादन्यः ॥ ४॥

स ह्यपरोक्षस्यानुवादः ॥ ५॥

तत्र समष्टेः शक्तिर्व्यष्टेर्व्युत्पत्तिश्चेति प्रादुर्भावनिमित्तम् ॥ ६॥

अतस्तस्य पारमेश्वरत्वमार्षत्वं च ॥ ७॥

तमागमप्रमाणमाहुरागमप्रमाणमाहुः ॥ ८॥

# समवायपरीक्षा

कार्ये कारणस्यानुगतिं समवायमाहुः ॥ १ ॥ (प्राचीनमतम्)

द्रव्यगुणयोर्द्रव्यकर्मणो द्रव्यजात्योर्गुणजात्योः कर्मजात्योश्च संसर्गम् ॥ २ ॥

अयुतसिद्धत्वात्संयोगादर्थान्तरम् ॥ ३ ॥

गुणेषु नान्तर्भवति गुणधर्मत्वात् ॥ ४ ॥

कर्मसु कर्मधर्मत्वात् ॥ ५ ॥

वासिष्ठस्त्वन्यथा मन्यते ॥ ६ ॥ (वासिष्ठमतम्)

केवलवस्तुपरीक्षायां कार्यकारणयोरभेद एव न सम्बन्धः ॥ ७ ॥

विशिष्टे कार्ये कारणस्यानुगतिर्नामान्तरापन्नविशेष्यरूपतयैव स्यात् ॥ ८ ॥

गुणादेस्तु समवायः संयोग इव न कश्चिद्व्यापार इति न वस्तुतो भावः ॥ ९ ॥

अयुतसिद्धेर्नातिरिच्यते ॥ १० ॥

अयुतस्यैवाश्रये स्वभावतः सिद्धिरयुतसिद्धिः ॥ ११ ॥

तामपृथक् सिद्धिमाहुर्व्यतिरेकतः ॥ १२॥

सैव समवायाख्यं भावान्तरमस्त्विति चेन्न तस्याः परीक्षकव्याख्यानमात्रत्वात् ॥ १३॥

अपृथक् सिद्धिसमवाययोरेकार्थत्वं त्विष्टम् ॥ १४॥

# अभावपरीक्षा

अभावश्च तत्त्वं प्रतीतेः ॥ १ ॥ (पूर्वपक्षः)

वाच्यत्वसामान्यात् ॥ २ ॥

अधिकरणविशेषाधायकत्वात् ॥ ३ ॥

असतः सदजायतेति मन्त्रवर्णात् ॥ ४ ॥

प्राक् सति जननस्यासिद्धेः ॥ ५ ॥

पश्चाद्विनाशस्य ॥ ६ ॥

अन्यत्रान्यत्वे भेदस्य ॥ ७ ॥

अविद्यायाः प्रतिष्ठित्यै ॥ ८ ॥

अहिंसादेर्धर्मस्य ॥ ९ ॥

तमसश्च ॥ १० ॥

न त्ववस्तुत्वादवस्तुधर्मत्वाच्च ॥ ११ ॥ (खण्डनम्)

वैषम्यात् ॥ १२ ॥

यदस्ति तत्तत्त्वं हि ॥ १३ ॥

प्रतीतिः प्रतियोगिसापेक्षा ॥ १४ ॥

तच्च नासत् ॥ १५ ॥

स्मृत्यारूढं सदेव देशतः कालतो वा विप्रकृष्टमसद्वत् प्रतीयते ॥ १६ ॥

अपि च नेन्द्रियं गृह्णात्यभावम् ॥ १७ ॥

विप्रकृष्टाभिलषितविषयेऽधिकरणे तस्य व्यापारमात्रम् ॥ १८ ॥

भूतले घटो नास्तीति प्रतीत्या न घटाभावः साध्यते ॥ १९ ॥

घटस्य सन्निकृष्टभूतलव्याप्तिरेव न साधिता स्यात् ॥ २० ॥

अस्त्वेव सोऽन्यत्रेति नासन् ॥ २१ ॥

मास्तु तस्य व्यापकत्वं देशकालाभ्यामपरिच्छिन्नम् ॥ २२ ॥

व्याप्यत्वमन्वयतः सत्ताभित्त्योरन्तः ॥ २३ ॥

बहिरसत्ता व्यतिरेकतः ॥ २४ ॥

व्यतिरेकेण व्यवहारो न वस्तु वस्तुधर्मं वा साधयेदन्यार्थत्वात् ॥ २५॥

तस्मात्तदभावस्य तत्तद्व्याप्यत्वं वस्तुतोऽर्थो वक्तव्यः ॥ २६॥(सिद्धान्तम्)

अतोऽन्योऽर्थो भाक्तः ॥ २७॥

अन्याभावादधिकरणे न कश्चन विशेषः ॥ २८॥

स एव नास्ति योऽन्यसंसर्गात् ॥ २९॥

ब्रह्मणस्पतेर्जगद्धमनस्य पूर्वप्रकृतत्वान्मान्त्रवर्णिकमसदविकृतम् अनीदृशं जगत् ॥ ३०॥

प्राक् सत एव विलक्षणनवावस्थापरिग्रहो जननम् ॥ ३१॥

स्वयं सत एव पूर्वावस्थात्यागो नाशः ॥ ३२॥

स्वत्वाद्विलक्षणाद्भेदो नान्यत्वाभावात् ॥ ३३॥

भूतले घटो नास्तीति प्रतीत्या घटे पटत्वं नास्तीति प्रतीतिर्व्याख्याता ॥ ३४॥

विपरीतं ज्ञानमविद्या ॥ ३५॥

अनुपलब्धाभिलषितविषयं वा ॥ ३६॥

अकार्यत्वधीपुरःसराहिंसादेर्निवृत्तिरहिंसादिर्नाभावः ॥ ३७॥

इन्द्रियनियामकवृत्तित्वात् ॥ ३८ ॥

छायात्वात्तमः ॥ ३९ ॥

तस्या प्रतिषिद्धा व्यावहारिकी प्रतीतिर्व्यावहारिकी प्रतीतिः ॥ ४० ॥
(उत्तरपक्षः)

# पञ्चजनचर्चा

## अर्थनिरूपणाधिकरणम्

मनुष्या एव पञ्चजनास्तत्पर्यायेषु पदस्य तस्य वैदिके लौकिके च निघण्टौ दर्शनात् ॥ १॥

विश्वेदेवा अदितिः पञ्चजना अदितिरिति देवेभ्यः पृथङ् निरूपणात् ॥ २॥

तस्मात्पञ्चदेवयोनयः पञ्चजना इति मतं पूर्वपक्ष एव निरुक्ते॥ ३॥

एतद्वै पञ्चजनानामुक्थं पञ्च पञ्चजना इति ब्राह्मणयोः पञ्चजना अन्ये योगसामान्यतो नैषां तत्रानुवादः ॥ ४॥

ब्राह्मणक्षत्रियवैश्यशूद्रनिषादा औपमन्यवस्य ॥ ५॥

चतुर्भ्यो नातिरिक्तोस्तीति चेच्चतुर्थस्यैव द्विधाग्रहणं जातिविशेष-दर्शनात् ॥ ६॥

वर्णविवक्षायामुभयसाधारणस्य शूद्रपदस्य प्रथमे वर्गे प्रयोग-रूढिस्त्रैवर्णिकसाधारणस्य विप्रपदस्येव ब्राह्मणे जातिपरं शूद्रपदं यत्तदन्यत् ॥ ७॥

अत एव नाम शूद्राभिधानत्वं पञ्चमस्य ॥८॥

शूद्राणामनिरवसितानामिति वदन् पाणिनिश्चात एव सङ्गच्छते ॥९॥

लक्षणेति चेत्सङ्गृह्य पर्युदासः किमर्थः ॥१०॥

इतरसङ्ग्रहणायेति चेदभिधयापि शक्यते ॥११॥

व्रात्यानां च चतुर्थत्वात् ॥१२॥

महाभाष्योदाहरणं च तथा हि भवति लक्षणा च तत्र नोक्ता ॥१३॥

अथ पञ्चमो निषादः पारशव इति चेन्नेतरेषामसङ्ग्रहात् ॥१४॥

तवापि सङ्कीर्णासङ्ग्रह इति चेत्तेषां पितृवर्णे मातृवर्णेऽन्यत्र वा सङ्ग्रहोद्विजधर्मित्वशूद्रसधर्मत्वस्मृतेस्तेषाम् ॥१५॥

प्रभाववत्पितृमतामनुलोमजानां पितृवर्णे ॥१६॥

प्रतिलोमजानां च ॥१७॥

इतरेषां मातृवर्णे ॥१८॥

उदाहरणान्येवं हि भवन्ति ॥१९॥

त्रैवर्णिकप्रतिलोमजानां च चतुर्थत्वमित्येके ॥२०॥

किञ्चिद्विशेषप्रदर्शनार्थाः सङ्कीर्णजातिसंज्ञाः पारिभाषिक्यः ॥ २१ ॥

न वर्णान्तरविधायिकाः ॥ २२ ॥

अत एव तत्र स्मृतिग्रन्थरीत्या जातिमात्रसंज्ञा ॥ २३ ॥

## जात्यस्पृश्यप्रतिषेधाधिकरणम्

नन्वस्पृश्यः पञ्चमः ॥ २४ ॥

अन्त्यः पापिष्ठ इति गौतमधर्मस्मृतेः ॥ २५ ॥

शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिष्कृत इति याज्ञवल्क्यधर्मस्मृतेः ॥ २६ ॥

चण्डालश्चाधमो नृणामिति मनुधर्मस्मृतेः ॥ २७ ॥

स्पर्शनिषेधो नेति चेदन्यत्रास्ति चतुर्युगदूरीकरणविधिः ॥ २८ ॥

आचारश्च दृश्यते बलवानिति चेत् ॥ २९ ॥

नैवं विषयभेदात् ॥ ३० ॥

प्रस्तुतो हि पञ्चमो निषादाख्यः स्वतन्त्रजातिर्न सङ्कीर्णः ॥ ३१ ॥

पञ्चजनपञ्चक्षितिपञ्चचर्षणीपञ्चमानवशब्देषु यः पञ्चमो वैदिकेषु ॥ ३२ ॥

तत्रापि चण्डालपदं तेषां चण्डचेष्टत्वात् ॥ ३३ ॥

सङ्कीर्णः चण्डालोऽन्यस्तस्मात् ॥ ३४ ॥

निघण्टुश्चाङ्गीकरोत्युभौ चण्डालपदवाच्यौ ॥ ३५ ॥

ग्रामबहिर्वासादिभिर्लिङ्गैरयं सङ्कीर्ण एवेत्युनुमीयत इति चेल्लिङ्गस्यानैकान्तिकत्वम् ॥ ३६ ॥

इतरेषां प्रतिलोमजानामदर्शनादन्तिमप्रतिलोमजादर्शनेनासङ्गतिः ॥ ३७ ॥

तवानुमितौ ब्राह्मणी शीलभङ्गो बहुलोऽनुमेयश्च स्यात् ॥ ३८ ॥

तवानुमितिः सत्या चेदर्धार्याः स्युरेते ॥ ३९ ॥

न चार्यशारीरमानसस्वभावोऽणुरप्येषु ॥ ४० ॥

अङ्गीकारे वा नायमस्पृश्यो भवति ॥ ४१ ॥

द्वेषहेतुदर्शनेन प्रागुक्तस्मृतिवचनानां मूलशब्दाननुमापकत्वे नाप्रामाण्यात् ॥ ४२ ॥

अपाञ्चरात्रनिन्दकबृहज्जाबालस्मृतिवचनवत् ॥ ४३ ॥

प्रतिलोमजानां विगर्हितत्वोक्तिश्च केवलं प्रतिलोम-सम्बन्ध-निषेध-निबन्धनार्था ॥ ४४ ॥

विप्रस्यासुरादिविवाहजानां विगर्हितत्वोक्तिवत् ॥ ४५॥

असवर्णया भार्यया नित्यानि कर्माणि कारयितुर्ब्राह्मणस्य चण्डालत्वोक्तिवत् ॥ ४६॥

तस्मान्न जात्या कश्चिदस्पृश्यः ॥ ४७॥

यदि भवति तर्हि दुष्कर्मणैव ॥ ४८॥

अस्पृश्यत्वेन सर्वधर्मबहिष्कारो व्याख्यातः ॥ ४९॥

धर्मचोदनानां च प्रायः साधारणत्वात् ॥ ५०॥

एवं चेत् त्रैवर्णिकेभ्य इतरेषां वैदिककर्माधिकारापत्तिरिति चेत्॥ ५१॥

तदिष्टं बादरेः ॥ ५२॥

अग्न्याधाने त्रयाणामेव श्रुतेर्नेति चेत् ॥ ५३॥

सामान्यतः प्राप्तस्यैव निमित्तार्था पुनःश्रुतिः सेतरं न व्यावर्तयति॥ ५४॥

सामान्यतः प्राप्तिश्च न केवलं कामश्रुत्यान्यत्र सामान्यत आधानश्रुत्यापि ॥ ५५॥

रथकारनिमित्तश्च कालनियमः स्याल्लिङ्गमितराधिकारे ॥ ५६॥

निषादस्थपतियाजनश्रुतिश्च ॥ ५७॥

यः पञ्चचर्षणीरभिनिषसाद दमे दम इत्यादीनि च मान्त्रवर्णिकानि लिङ्गानि ॥ ५८॥

इतरस्य ब्रह्मसामप्रक्रमाश्रवणान्नेति चेन्नाभीवर्तचक्षुर्निमित्तयोः सामान्यतः सद्भावात् ॥ ५९॥

अनाधानाभ्युपगमेपि नेतरस्य कर्मानधिकारः ॥ ६०॥

आधानस्य पुरुषार्थत्वात् ॥ ६१॥

क्रत्वर्थत्वमेवाग्नीनामनन्यथासिद्धिरिति चेद्दीक्षान्याग्नीनाम् उत्पादनम् अन्यत् ॥ ६२॥

अकर्मत्वं चैकाग्नीभजनस्य स्यात् ॥ ६३॥

लाक्षणिक एव श्रौतस्मार्तविभागः स्मार्तस्यापि श्रुतिमूलकत्वेन श्रौतत्वात् ॥ ६४॥

नन्वितरस्य वेदानधिकारात्कर्मानधिकारः ॥ ६५॥

सर्वकर्मसु विद्याश्रुतेः ॥ ६६॥

वेदानधिकारश्च तदुपनयनाश्रुतेः ॥ ६७॥

निषेधस्मृतिभ्यश्चेति चेत् ॥ ६८॥

उपनयनं पुरुषार्थं नाध्ययनार्थं तस्मान्नैवमित्येके ॥ ६९॥

उपनयनस्य आचार्यकरणत्वेपि न पुरुषार्थत्वहानिः ॥ ७०॥

जातकर्मण इव पितृकरणत्वेपि ॥ ७१॥

अध्ययने च तत्प्रयुक्तविशेषादर्शनात् ॥ ७२॥

अनुपनीतस्यापि सम्भवति ह्यध्ययनम् ॥ ७३॥

गुरुमुखात्स्वतन्त्रतया वा ॥ ७४॥

अस्तु वा संस्कार इतरस्यापीति परे ॥ ७५॥

त्रैवर्णिकोपनयनश्रुतिश्च निमित्तार्था भवति ॥ ७६॥

सामान्यशास्त्रेणाध्ययनस्य प्राप्तत्वात् ॥ ७७॥

तस्य समर्थपरत्वमिति चेत्तथापि नासङ्गतिः ॥ ७८॥

विशेषस्य प्रापकत्वं सामान्यस्य तदनुसोरण सङ्कोचश्च विसंष्ठुलः ॥ ७९॥

यद्यपि विधयः समर्थलाभेन चरितार्थास्तथापि सामर्थ्यं यत्किञ्चिज्जातिगतं व्यवस्थापयितुं न शक्नुयुः ॥ ८०॥

इतरोपनयनस्य च शक्यत्वात्तस्यासामर्थ्यमनैसर्गिकम् ॥ ८१॥

अध्ययनाक्षिप्तत्वादुपनयनस्य न श्रुतिः पृथगपेक्ष्या ॥ ८२॥

इतरस्यानुष्टुभत्वोक्तिः स्पष्टं तस्य संस्कारद्योतिका च भवति ॥ ८३॥

इतरोपनयननिषेधस्मृतयो हेतुदर्शनेन दुर्बलाः ॥ ८४॥

एते नेतरस्य श्मशानसाम्यस्मृतिश्च व्याख्याता ॥ ८५॥

एवमपि पञ्चमस्य निरवसितत्वान्नेति चेन्नपात्रबहिष्कारमात्रस्य निरवसितत्वपदार्थत्वात् ॥ ८६॥

स च सामयाचारिकः ॥ ८७॥

एवं पञ्चजनाश्चतुर्षु वर्णेष्वन्तर्भवन्ति चत्वारश्च वर्णाः स्युर्धर्माधिकारिण इत्युक्तं भवति ॥ ८८॥

सेयमष्टाशीत्या सूत्राणां पञ्चजनचर्चा भवति ॥ ८९॥

# गोत्रप्रवरनिर्णयः

## प्रथमोऽध्यायः

अथातो गोत्राणि प्रवरांश्च व्याख्यास्यामः ॥ १॥

भृगोरङ्गिरसोऽत्रेर्विश्वामित्रस्य कश्यपस्य वासिष्ठस्यागस्त्यस्य च महाकुलानि सप्त भवन्ति ॥ २॥

गोत्राणि चात्रिप्रभृतीनां पञ्चानां कुलानि नामान्तरेण ॥ ३ ॥

भृगोर्महाकुले जमदग्नेः शाखाकुलमेकं गोत्रम् ॥ ४॥

अङ्गिरसो गोतमभरद्वाजयोः शाखाकुले द्वे गोत्रे ॥ ५॥

एवं गोत्राण्यष्टैव प्राचां धर्मनिबन्धकानां शास्त्रेषु ॥ ६॥

व्यवहारे तु सर्वाण्यपि शाखाकुलानि गोत्राणि ॥ ७॥

यानि सप्तानामपि महाकुलेषु ॥ ८॥

कुलाष्टक एव गोत्रपदं पारिभाषिकम् ॥ ९॥

सर्वत्र तु रूढं लोकप्रामाण्याद्ग्रन्थेषु प्रयोगबाहुल्याच्च ॥ १० ॥

सगोत्रां नोद्वहेदित्यत्र गोत्रपदं पारिभाषिकं चेत् कुत्सानां हरितानां च विवाहप्रसङ्गः ॥ ११ ॥

अङ्गिरसं विना द्वितीयतृतीययोः प्रवरयोस्तेषां भिन्नभिन्नत्वात् ॥ १२ ॥

यथा रूढि चेदप्ययं दोषो भिन्नगोत्रव्यवहारादिति चेत् ॥ १३ ॥

उभयत्रापि समानार्षत्वमिति निषेधः ॥ १४ ॥

उक्तमसमानार्षत्वमिति चेत् ॥ १५ ॥

वैकल्पिकेन चर्षिणा समानार्षत्वम् ॥ १६ ॥

हरितानां मान्धाता हि वैकल्पिकऋषिः ॥ १७ ॥

एवमपि विकल्पस्य व्यवस्थितत्वादेकदेशे निषेधाप्राप्तिः ॥ १८ ॥

रुचिविशेषाद्वरणविशेषो तत्र शास्त्रव्यवस्थेत्यदोषः ॥ १९ ॥

केनचित्प्रवरवता गोत्रेण निषेधः प्राप्तश्चेत्स तत्सगोत्रेणापीति व्यवस्था वा ॥ २० ॥

अवश्यं चैषा कर्तव्या ॥ २१ ॥

सङ्कृतीनां कुण्डिनानां चाविवाहाय ॥ २२॥

तथापि यथा रूढि चेद्धरितानां विष्णुवृद्धानां चाविवाहप्रसङ्गः केषुचिद्देशेषूभयेषां चाङ्गिरसगोत्रत्वरूढेः॥ २३॥

तस्मात्सगोत्रां नोद्वहेदित्यत्र यथा परिभाषमर्थः ॥ २४॥

अष्टानामन्यतमस्य प्रवरत्वेन दर्शनं गोत्रलिङ्गम् ॥ २५॥

तद्गोत्रस्तद्वल्लिङ्गविचारे ॥ २६॥

द्विलिङ्गं मिश्रगोत्रम् ॥ २७॥

मिश्रगोत्रा उभयेषां च सगोत्राः ॥ २८॥

गोत्राष्टकादन्यत्र भृगुमङ्गिरसं च विना प्रवरस्यैकस्य वा साम्ये समानार्षाः ॥ २९॥

गोत्रतदितरयोश्चैवं समानार्षत्वम् ॥ ३०॥

गोत्रतदितरलिङ्गस्य च मिश्रगोत्राख्या ॥ ३१॥

तद्वन्तः पूर्वेषां सगोत्रा अपरेषां समानार्षाः ॥ ३२॥

शुद्धभृगवः शुद्धाङ्गिरसश्चेत्यगोत्रलक्षणाः द्वेधा ॥ ३३॥

सगोत्रां समानार्षां च नोद्वहेत् ॥ ३४॥

अयं प्राचीनमतेन नयः ॥ ३५॥

सगोत्रां नोद्वहेदित्येवालमिति वासिष्ठः ॥ ३६॥

समानार्षत्वमपि सगोत्रत्वं व्याख्यास्यामः ॥ ३७॥

शुद्धभृगुषु शुद्धाङ्गिरःसु च समानार्षामित्यनेन त्रयमेव विनिवार्यम् ॥ ३८॥

जमदग्नीनां आर्ष्टिवेणानां चेत्येकम् ॥ ३९॥

कुत्सानां हरितानां चेति द्वितीयम् ॥ ४०॥

वसिष्ठानां सङ्कृतीनां चेति तृतीयम् ॥ ४१॥

अन्यत्र गणैक्यं गोत्रैक्यान्नातिरिच्यत इत्यापातत एव प्राप्तिः ॥ ४२॥

एतेष्वपि गणैक्यं ब्रूमः ॥ ४३॥

जमदग्नय आर्ष्टिवेणाश्च च्यवनाः सामान्यतः ॥ ४४॥

हरिताः कुत्साश्च मान्धातारः ॥ ४५॥

सङ्कृतयो वासिष्ठेष्वन्तर्भाव्याः ॥ ४६॥

येन नाम्ना गणनिर्देशस्तन्नाम्ना तद्गोत्रं शास्त्रीयं व्यवहर्तव्यमित्युक्तं भवति ॥ ४७॥

एवं सप्तदशगोत्राणि भवन्ति ॥ ४८॥

च्यवनस्य यस्कस्य मित्रयोर्वैनस्य शुनकस्य गोतमस्य भरद्वाजस्य मान्धातुः कण्वस्य रथीतरस्य विष्णुवृद्धस्य मुद्गलस्यात्रेर्विश्वामित्रस्य कश्यपस्य वसिष्ठस्यागस्त्यस्य चेति यथा गणप्रसिद्धि ॥ ४९॥

यस्कमित्रयुशुनकरथीतरविष्णुवृद्धानां स्थाने वीतहव्यदिवोदास-गृत्समदविरूपपुरुकुत्सा इति वा ॥ ५०॥

उत्तराण्येव पूर्वेषां नामानि ज्यायांसि तेषां मन्त्रद्रष्टृत्वात् ॥ ५१॥

दिवोदासपुरुकुत्सयोस्तु मन्त्रप्रसिद्धत्वात् ॥ ५२॥

## द्वितीयोऽध्यायः

अथ च्यवनस्य गोत्रं व्याख्यास्यामः ॥ १॥

जमदग्नयो वत्साश्च बिदाश्चेति द्वेधा ॥ २॥

वत्सानां भार्गवच्यावनाप्नुवानौर्वजामदग्न्यपञ्चार्षेयप्रवरम् ॥ ३॥

भृगुश्च्यवनोऽप्नुवान और्वो जमदग्निश्च पञ्चप्रवरा ऋषय इत्युक्तं भवति ॥ ४॥

ऋषिरण्प्रत्ययान्तोण्यप्रत्ययान्तो वा होतुर्वाक्ये यथोदाहृतम् ॥ ५॥

अभिवादनेषु च ॥ ६॥

मतुबन्तोऽध्वर्योः ॥ ७॥

सर्वाण्यत्र प्रवरोदाहरणानि होतृवाक्यानुसारीणि ॥ ८॥

अध्वर्योर्वाक्ये व्यत्ययेन च पाठः ॥ ९॥

भार्गवस्थाने वात्स्येति वा ॥ १०॥

आद्यैस्त्रिभिस्त्र्यार्षेयप्रवरं वा ॥ ११॥

जामदग्न्यस्थाने बैदेति बिदानाम् ॥ १२॥

भार्गवौर्वजामदग्न्येति त्र्यार्षेयमुभयेषां समानम् ॥ १३॥

पूर्वं चेति वासिष्ठः ॥ १४॥

वत्सपुरोधसो वैजमथिताः भार्गवाः मौनभार्गवाः वेदविश्वज्योतिषः शाठरमाठराश्चेत्येते षडपि जमदग्निषु कैश्चित्पठ्यन्ते ॥ १५॥

वत्सपुरोधसामुत्तरयोः स्थाने वात्स्यपौरोधसेति ॥ १६॥

वैजमातिथेति वैजमतिथानाम् ॥ १७॥

भार्गवेत्युत्तरस्य स्थाने भार्गवाणाम् ॥ १८ ॥

अत्र भार्गवादेवाणभृगोस्तु नस्यात्पुनरुक्त्यापत्तेः ॥ १९ ॥

भार्गव इति कस्यापि न स्वं नाम ॥ २० ॥

गोत्रकृतं तु तत् ॥ २१ ॥

जमदग्नेरेव स्यादिति वासिष्ठः ॥ २२ ॥

मौनभार्गवाणां मौनभार्गवेत्युत्तरस्य स्थाने ॥ २३ ॥

अत्र मुनेर्भार्गवादण् ॥ २४ ॥

मुनिरिति कस्यापि न स्वं नाम ॥ २५ ॥

गुणकृतं तु तत् ॥ २६ ॥

व्याख्यातं भार्गवनाम ॥ २७ ॥

स च भार्गवो मुनिर्जमदग्निरेव स्यादिति वासिष्ठः ॥ २८ ॥

जमदग्निरेव हि प्रसिद्धो मुनिः सप्तानां प्रसिद्धानां ऋषीणाम् अन्यतम-त्वात् ॥ २९ ॥

भार्गववैदवैश्वज्योतिषेति वेदविश्वज्योतिषाम् ॥ ३० ॥

भार्गवशाठरमाठरेति शाठरमाठराणाम् ॥ ३१ ॥

षण्णां च पूर्वं वा त्र्यार्षेयप्रवरम् ॥ ३२ ॥

काश्यपो मठरोऽन्यो भार्गवान्मठरात् ॥ ३३ ॥

भार्गवच्यावनाप्नुवानार्ष्टिषेणानूपेति पञ्चार्षेयप्रवरमार्ष्टिषेणानाम् ॥ ३४ ॥

भार्गवार्ष्टिषेणानूपत्र्यार्षेयप्रवरं वा ॥ ३५ ॥

पूर्वं वा त्र्यार्षेयप्रवरम् ॥ ३६ ॥

इति च्यवनाः ॥ ३७ ॥

## तृतीयोऽधायः

अथ वीतहव्यस्य गोत्रं व्याख्यास्यामः ॥ १ ॥

भार्गववैतहव्यसावेदस त्र्यार्षेयप्रवरम् ॥ २ ॥

एतेषां वाधूला इत्यपरा संज्ञा ॥ ३ ॥

इति वीतहव्याः ॥ ४ ॥

## चतुर्थोऽध्यायः

अथ दिवोदासस्य गोत्रं व्याख्यास्यामः ॥ १॥

भार्गवदैवोदासवाध्र्यश्व त्र्यार्षेयप्रवरम् ॥ २॥

व्यत्ययेन वा द्वितीयतृतीयौ ॥ ३॥

वाध्र्यश्वेत्येकार्षेयप्रवरं वा ॥ ४॥

इति दिवोदासाः ॥ ५॥

## पञ्चमोऽध्यायः

अथ वेनस्य गोत्रं व्याख्यास्यामः ॥ १॥

भार्गववैन्यपार्थ त्र्यार्षेयप्रवरम् ॥ २॥

एतेषां पार्था इत्यपरा संज्ञा ॥ ३॥

श्विता इत्यन्या ॥ ४॥

इति वेनाः ॥ ५॥

## षष्ठोऽध्यायः

अथ गृत्समदस्य गोत्रं व्याख्यास्यामः ॥ १ ॥

भार्गवशौनहोत्रगार्त्समद त्र्यार्षेयप्रवरम् ॥ २ ॥

भार्गवगार्त्समद व्यार्षेयप्रवरं वा ॥ ३ ॥

गार्त्समदत्येकार्षेयप्रवरं वा ॥ ४ ॥

शौनकेति वा ॥ ५ ॥

इति गृत्समदाः ॥ ६ ॥

## सप्तमोऽध्यायः

अथ गोतमस्य गोत्रं व्याख्यास्यामः ॥ १ ॥

गोतमो गौतमः केषाञ्चित्तत्प्रामादिकम् ॥ २ ॥

अयास्याः शरद्वन्तः कुमण्डाः दीर्घतमसः करेणुपालाः वामदेवा उशनसो रहूगणाः सोमराजकाः बृहदुक्था उचथ्याः राघवा इति द्वादशधा गोतमाः ॥ ३ ॥

आङ्गिरसायास्यागौतम त्र्यार्षेयप्रवरमयास्यानाम् ॥ ४ ॥

आङ्गिरसगौतमशारद्वतेति शरद्वताम् ॥५॥

आङ्गिरसौचथ्यकाक्षीवतगौतमकौमण्डेति पञ्चार्षेयं कुमण्डानाम् ॥६॥

गौतमौशिजकाक्षीवतेति वा तृतीयादयः ॥७॥

अत्रोशिगृषिका ॥८॥

अयास्यौशिजगौतमकाक्षीवतेति वा द्वितीयादयः ॥९॥

आङ्गिरसौशिजकाक्षीवतेति त्र्यार्षेयं वा ॥१०॥

औचथ्येति वाऽत्र द्वितीयः ॥११॥

औचथ्यगौतमकौमण्डेति वा ॥१२॥

आङ्गिरसौचथ्यकाक्षीवतगौतमदैर्घतमसेति पञ्चार्षेयं वा दीर्घतमसाम् ॥१३॥

द्वितीयादी विना त्र्यार्षेयं वा ॥१४॥

आङ्गिरसगौतमकारेणुपालेति करेणुपालानाम् ॥१५॥

वामदेव्येति तृतीयो वामदेवानाम् ॥१६॥

व्यत्ययेन वा द्वितीयतृतीयौ ॥१७॥

बार्हदुक्थेति द्वितीयो वा प्रागुक्ते ॥ १८ ॥

आङ्गिरसगौतमौशनसेत्युशनसाम् ॥ १९ ॥

अत्रोशना भार्गवादन्यः ॥ २० ॥

आङ्गिरसराहूगणगौतमेति रहूगणानाम् ॥ २१ ॥

आङ्गिरससौमराजगौतमेति सोमराजकानाम् ॥ २२ ॥

आङ्गिरसबार्हदुक्थगौतमेति बृहदुक्थानाम् ॥ २३ ॥

आङ्गिरसगौतमौचथ्येत्युचथ्यानाम् ॥ २४ ॥

आङ्गिरसराघवगौतमेति राघवाणाम् ॥ २५ ॥

सर्वत्रोचथ्यमुतथ्यमुच्चारयन्त्येके ॥ २६ ॥

इति गोतमाः ॥ २७ ॥

## अष्टमोऽध्यायः

अथ भरद्वाजस्य गोत्रं व्याख्यास्यामः ॥ १ ॥

भरद्वाजाः गर्गाऋक्षाः कपय आत्मभुवश्चेति भरद्वाजाः पञ्च ॥ २ ॥

साधारणनामानः पूर्वे ॥ ३॥

आङ्गिरस बार्हस्पत्य भारद्वाज त्र्यार्षेय प्रवरं भरद्वाजानाम् ॥ ४॥

शैन्यगार्ग्येति सह पञ्चार्षेयं गर्गाणाम् ॥ ५॥

आङ्गिरस शैन्य गार्ग्येति त्र्यार्षेयं वा ॥ ६॥

व्यत्ययेन वा द्वितीय तृतीयौ ॥ ७॥

आङ्गिरस तैत्तिरका विभुवेति वा ॥ ८॥

आङ्गिरस-बार्हस्पत्य-भारद्वाज-वान्दन-मातवचसेति पञ्चार्षेयम् ऋक्षाणाम् ॥ ९॥

द्वितीयादी विना त्र्यार्षेयं वा ॥ १०॥

आङ्गिरसामहीयवौरुक्षयेति कपीनाम् ॥ ११॥

आङ्गिरस-बार्हस्पत्य-भारद्वाज-वारात्मभुवेति पञ्चार्षेयम् आत्मभुवाम् ॥ १२॥

इति भरद्वाजाः ॥ १३॥

## नवमोऽध्यायः

अथ मान्धातुर्गोत्रं व्याख्यास्यामः ॥ १॥

हरिताः कुत्सा इति मान्धातारो द्वेधा ॥ २॥

आङ्गिरसाम्बरीष यौवनाश्व त्र्यार्षेय प्रवरं हरितानाम् ॥ ३॥

मान्धात्रेतिवा प्रथमः ॥ ४॥

तृतीयो वा ॥ ५॥

आङ्गिरस-मान्धात्र-कौत्सेति कुत्सानाम् ॥ ६॥

## दशमोऽध्यायः

अथ कण्वस्य गोत्रं व्याख्यास्यामः ॥ १॥

आङ्गिरसाजमीढ-काण्वेति त्र्यार्षेयप्रवरम् ॥ २॥

घौरेति वा द्वितीयः ॥ ३॥

इति कण्वाः ॥ ४॥

## एकादशोऽध्यायः

अथ विरूपस्य गोत्रं व्याख्यास्यामः ॥ १ ॥

आङ्गिरस-वैरूप-राथीतरेति त्र्यार्षेयप्रवरम् ॥ २ ॥

पार्षदश्वेति वा तृतीयः ॥ ३ ॥

तत्र व्यत्ययेन वा द्वितीयादी ॥ ४ ॥

आष्टादंष्ट्रेति वा तत्र पूर्वः ॥ ५ ॥

इति विरूपाः ॥ ६ ॥

## द्वादशोऽध्यायः

अथ पुरुकुत्सस्य गोत्रं व्याख्यास्यामः ॥ १ ॥

आङ्गिरस-पौरुकुत्स्य-त्रासदस्यवेति त्र्यार्षेयप्रवरम् ॥ २ ॥

व्यत्ययेन वा द्वितीयतृतीयौ ॥ ३ ॥

नितुन्दिनाः शठमर्षणाश्चैते भण्यन्ते ॥ ४ ॥

इति पुरुकुत्साः ॥ ५ ॥

## त्रयोदशोऽध्यायः

अथ मुद्गलस्य गोत्रं व्याख्यास्यामः ॥१॥

आङ्गिरस-भर्म्यश्व-मौद्गल्येति त्र्यार्षेयप्रवरम् ॥२॥

तार्क्ष्येति वा प्रथमः ॥३॥

द्वितीयो वा ॥४॥

तार्क्ष्येति वा द्वितीयः ॥५॥

इति मुद्गलाः ॥६॥

## चतुर्दशोऽध्यायः

अथात्रेर्गोत्रं व्याख्यास्यामः ॥१॥

श्यावाश्राः गविष्ठिराः वाद्भुतकाः पूर्वातिथयोऽतिथयः सुमङ्गलाश्च षडत्रयः ॥२॥

आत्रेयार्चनानस-श्यावाश्वेति त्र्यार्षेयप्रवरं श्यावाश्वानाम् ॥३॥

गाविष्ठिरेति तृतीयो गविष्ठराणाम् ॥४॥

वाद्भुतकेति वाद्भुतकानाम् ॥ ५॥

पौर्वातिथेति पूर्वातिथीनाम् ॥ ६॥

आतिथेति गाष्ठिरेति वाऽतिथीनाम् ॥ ७॥

सुमङ्गलानां च ॥ ८॥

सौमङ्गलेति द्वितीयो वा ॥ ९॥

अतिथिर्वामरथः पुत्रिका च वामरथानाम् ॥ १०॥

अतिथिवद्वा ॥ ११॥

श्यावाश्ववद्वा ॥ १२॥

इमेऽत्रिवसिष्ठ-विश्वामित्र-गोत्रलिङ्गा इत्येके ॥ १३॥

अत्रेरेव गोत्रे सप्तमो गण इति वासिष्ठः ॥ १४॥

इत्यत्रयः ॥ १५॥

## पञ्चदशोऽध्यायः

अत्र विश्वमित्रस्य गोत्रं व्याख्यास्यामः ॥ १॥

लोहिताः रूक्षकाः कामकायना अजाः कुशिकाः सहुलाः वेणवोऽश्मरथाः रोहिणाः देवराताः सालङ्कायनाः पूरणा इन्द्रकौशिकाः हिरण्यरेतसः सुवर्णरेतसः कपोतरेतसो घृतकौशिकाः कथकाः कताः धनञ्जयाश्चेति विंशतिधा विश्वामित्राः ॥ २॥

वैश्वामित्राष्टक-लौहितत्र्यार्षेयप्रवरं लोहितानाम् ॥ ३॥

व्यत्ययेन वा द्वितीयतृतीयौ ॥ ४॥

वैश्वामित्र गाथिन रैणवेति रूक्षकाणाम् ॥ ५॥

वैश्वामित्र दैवश्रवस दैवतरसेति कामकायनानाम् ॥ ६॥

द्वावेव वा द्वितीयं प्रथमं वा विना ॥ ७॥

वैश्वामित्र माधुच्छन्दसाजेत्यजानाम् ॥ ८॥

वैश्वामित्राघमर्षण-कौशिकेति कुशिकानाम् ॥ ९॥

वैश्वामित्र-साहुलमाहुलेति सहुलानाम् ॥ १०॥

वैश्वामित्र-गाथिन-वैणवेति वेणूनाम् ॥ ११॥

वैश्वामित्राश्मरथ्य वाधुलेत्यश्मरथानाम् ॥ १२॥

वैश्वामित्र-माधुच्छन्दस-रौहिणेति रोहिणानाम् ॥ १३॥

वैश्वामित्र-दैवरातौ-दलेति देवरातानाम् ॥ १४ ॥

वैश्वामित्र-सालङ्कायन-कौशिकेति सालङ्कायनानाम् ॥ १५ ॥

दैवरातेति वा तृतीयः ॥ १६ ॥

वैश्वामित्र-पौरेणेति व्यार्षेयप्रवरं पूरणानाम् ॥ १७ ॥

ऐन्द्रकौशिकेति द्वितीय इन्द्रकौशिकानाम् ॥ १८ ॥

हैरण्यरेतसेति हिरण्यरेतसाम् ॥ १९ ॥

सौवर्णरेतसेति सुवर्णरेतसाम् ॥ २० ॥

कापोतरेतसेति कपोतरेतसाम् ॥ २१ ॥

घार्तकौशिकेति घृतकौशिकानाम् ॥ २२ ॥

काथकेति कथकानाम् ॥ २३ ॥

वैश्वामित्र कात्याक्षीलेति कतानाम् ॥ २४ ॥

आङ्गिरसपूर्वमेवैतन्मिश्रम् ॥ २५ ॥

वैश्वामित्र-माधुच्छन्दस-धानञ्जय्येति धनञ्जयानाम् ॥ २६ ॥

आत्रेयपूर्वमेवैतन्मिश्रम् ॥ २७ ॥

इति विश्वमित्राः ॥ २८ ॥

## षोडशोऽध्यायः

अथ कश्यपस्य गोत्रं व्याख्यास्यामः ॥ १ ॥

नैध्रुवकाश्यपाः रेभाः शण्डिलाः मठराश्चेति चतुर्धा कश्यपाः ॥ २ ॥

काश्यपा वत्सारनैध्रुवेति त्र्यार्षेयप्रवरं नैध्रुवकाश्यपानाम् ॥ ३ ॥

रैभ्येति तृतीयो रेभाणाम् ॥ ४ ॥

शाण्डिल्येति शाण्डिलानाम् ॥ ५ ॥

आसितेति वा ॥ ६ ॥

दैवलेति वा ॥ ७ ॥

दैवलासितेति वा द्वितीयादी ॥ ८ ॥

द्वावेव वा तौ ॥ ९ ॥

शाण्डिल्यदैवलासितेति वा ॥ १० ॥

काश्यपा-वत्सार-नैध्रुव-रैभ्य-शाण्डिल्येति पञ्चार्षेयं वा ॥ ११ ॥

काश्यपा-वत्सार-नैध्रुव-रैभरैभ्य-शाण्डिल-शाण्डिल्येति सप्तार्षेयं वा ॥ १२ ॥

नैध्रुव-काश्यप-माठरेति मठराणाम् ॥ १३ ॥

इति कश्यपाः ॥ १४ ॥

## सप्तदशोऽध्यायः

अथ वसिष्ठस्य गोत्रं व्याख्यास्यामः ॥ १ ॥

वसिष्ठाः कुण्डिना उपमन्यवः पराशराः सङ्कृतयेश्चेति वसिष्ठाः पञ्चधा ॥ २ ॥

वासिष्ठेत्येकार्षेयप्रवरं वसिष्ठानाम् ॥ ३ ॥

वासिष्ठ-मैत्रावरुण-कौण्डिन्येति त्र्यार्षेयं कुण्डिनानाम् ॥ ४ ॥

अत्र मित्रावरुणावेकवत् ॥ ५ ॥

वासिष्ठैन्द्र प्रमदाभरद्वसव्येत्युपमन्यूनाम् ॥ ६ ॥

वासिष्ठ-शक्त्य-पाराशर्येति पराशराणाम् ॥ ७ ॥

आङ्गिरस-गौरवीत-साङ्कृत्येति सङ्कृतीनाम् ॥ ८ ॥

शात्क्येति वा प्रथमः ॥ ९॥

अत्र व्यत्ययेन वा द्वितीयतृतीयौ ॥ १०॥

शुद्धाङ्गिरोलिङ्गमिश्रत्वात्सङ्कृतयो मिश्रगोत्रा इत्येके ॥ ११॥

नेति वासिष्ठो लिङ्गस्य गणान्तरासम्बद्धत्वात् ॥ १२॥

गोत्रकृतमुल्लङ्घ्य ततोऽपि प्राचीनस्य कूटस्थस्य वरणं केवलं तत्पूजायै ॥ १३॥

न तदीयवंशशाखान्तरमिश्रत्वद्योतनाय ॥ १४॥

मिश्रत्वाङ्गीकारे वा सङ्कृतीनां वसिष्ठा एव बन्धवो नेतरे ॥ १५॥

इति वसिष्ठाः ॥ १६॥

## अष्टादशोऽध्यायः

अथागस्त्यस्य गोत्रं व्याख्यास्यामः ॥ १॥

अगस्तयो वामोदकाः पाणिका इध्मावाहाः साम्भवाहाः सोमवाहाः यज्ञवाहाः दर्भवाहाः सारवाहाः पूर्णमासाश्चेति दशधाऽगस्तयः ॥ २॥

आगस्त्येत्येकार्षेयमगस्तीनाम् ॥ ३॥

आगस्त्य-माहेन्द्र-मायो-भुवेति त्र्यार्षेयं वा ॥ ४॥

आगस्त्य-हैमवर्चिष-हैमोदकेति वामोदकानाम् ॥ ५॥

आगस्त्य-पैनायक-पाणिकेति पाणिकानाम् ॥ ६॥

आगस्त्य-दार्ढच्युतैध्मवाहेतीध्मवाहानाम् ॥ ७॥

साम्भवाहेति तृतीयः साम्भवाहानाम् ॥ ८॥

सौमवाहेति सोमवाहानाम् ॥ ९॥

याज्ञवाहेति यज्ञवाहानाम् ॥ १०॥

दार्भवाहेति दर्भवाहानाम् ॥ ११॥

सारवाहेति सारवाहानाम् ॥ १२॥

पौर्णमासपारणेति द्वितीयादी पूर्णमासानाम् ॥ १३॥

इत्यगस्त्यः ॥ १४॥

## एकोनविंशोऽध्यायः

अथ मिश्रगोत्रान् व्याख्यास्यामः ॥ १॥

च्यवनस्य दिवोदासस्य च गोत्रलिङ्गवन्तश्च्यावन दैवोदासाः ॥ २॥

भार्गव-च्यावन-दैवोदासेति त्र्यार्षेयं गोत्रं तेषाम् ॥ ३॥

भरद्वाजस्य विश्वामित्रस्य च शुङ्गाः ॥ ४॥

आङ्गिरस-बार्हस्पत्य-भारद्वाज-शौङ्ग-शैशिरेति पञ्चार्षेयं तेषाम् ॥ ५॥

कात्याक्षीलेति वा चतुर्थादी ॥ ६॥

अङ्गिरसपूर्वौ वातौ त्र्यार्षेयम् ॥ ७॥

कपिलाः शुङ्गवत् ॥ ८॥

आङ्गिरस-मातवचस-वैश्वामित्रेति तेषाम् ॥ ९॥

अत्रेर्विश्वामित्रस्य चात्रेय कौशिकाः ॥ १०॥

आत्रेय-माधुच्छन्दस-धानञ्जय्येति तेषाम् ॥ ११॥

वसिञष्ठस्यात्रेश्च जतूकर्णाः ॥ १२॥

वासिष्ठात्रेय-जातूकर्ण्येति तेषाम् ॥ १३॥

कश्यपस्य वसिष्ठस्य च लौगाक्षयः ॥ १४॥

कायपा-वत्सार-वासिष्ठेति तेषाम् ॥ १५॥

अहर्वसिष्ठानां नक्तं कश्यपानां किल ते सगोत्राः कर्मकलापे ॥ १६॥

## विंशोऽध्यायः

एवं प्राचां मतेन गोत्राणि प्रवराश्च व्याख्याताः ॥ १॥

प्रव्रियते कर्मस्विति प्रवरः ॥ २॥

देवताभ्यः पूर्वेषां सख्यस्य सूचनाय पूर्वप्रवरणम् ॥ ३॥

एकं द्वौ त्रीन् पञ्च वा वृणुयादिति समयः ॥ ४॥

शण्डिलेषु सप्तवरणमशास्त्रीयमिति चेत् ॥ ५॥

एकैकस्यादराद्द्विर्द्विर्वरणमतो न दोष इति वासिष्ठः ॥ ६॥

सामयिकान्येव मिश्रगोत्राणि ॥ ७॥

गोत्रान्तरात्पुत्रस्वीकरणं बीजिक्षेत्रिविवादाश्चात्र मूलम् ॥ ८॥

पुत्र एकस्यैवस्यात्कदाचिदपि न द्वयोरिति वासिष्ठः ॥ ९॥

द्वयोः कर्माचरणमन्यत्पुत्रत्वमन्यत् ॥ १०॥

तस्मान्मिश्रगोत्रा अन्यतरं पक्षमाश्रयेरन् ॥ ११ ॥

च्यवनस्य च्यावन दैवोदासाः ॥ १२ ॥

भरद्वाजस्य शुङ्गाः कपिलाश्च ॥ १३ ॥

विश्वामित्रस्यात्रेय कौशिकाः ॥ १४ ॥

वसिष्ठस्य जतूकर्णाः ॥ १५ ॥

कश्यपस्य लौगाक्षयः ॥ १६ ॥

सर्वाणि गोत्राणि व्यवहारसौष्ठवाय सकुल्यैकमत्याय प्रधानादरणाय चैकार्षेयप्रवराणि स्युरेकार्षेयप्रवराणि स्युः ॥ १७ ॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनो-
र्गणपतिमुनेः कृतिर्गोत्रप्रवरनिर्णयः समाप्तः ॥

# विवाहधर्मसूत्रम्

**प्रथमः खण्डः**

कन्याया अलङ्कृत्यार्हाय प्रदानं ब्राह्मे विवाहे पूर्वम् ॥ १॥

तदेव सहोभौ चरतां धर्ममिति समयपूर्वकं प्राजापत्ये ॥ २॥

अध्वर्यवे दक्षिणात्वेन दैवे ॥ ३॥

गोमिथुनं गामेकां वा वरात् प्रतिगृह्यार्षे ॥ ४॥

गुरुजनयत्नान्मिलिते समवाये कन्यया वरस्य प्रीत्या वरणं स्वयंवर-गान्धर्वे सामान्यतो दृष्टस्या वा ॥ ५॥

सह राज्ञा कन्यापक्षं निर्जित्य हरणं राक्षसे ॥ ६॥

इच्छन्त्यास्तु राक्षसगान्धर्व इति वासिष्ठः ॥ ७॥

कन्यापित्रे नियतशुल्कप्रदानं मानुषे तमप्यासुरमेके ॥ ८॥

काङ्क्षितशुल्कप्रदानमासुरे ॥ ९॥

यः कश्चिद्विजयो वीर्यशुल्के ॥ १० ॥

कन्यापित्रा निर्धारित एव विषये ॥ ११ ॥

कन्यायै तत्पितृकाङ्क्षितालङ्कारदानमलङ्कारशुल्के ॥ १२ ॥

एतेष्वेकादशस्वनन्तरः संस्कारस्तुल्यः सर्वेषु ॥ १३ ॥

प्रीतिमतोर्मिथोयोगो मिथोयोगगान्धर्वः ॥ १४ ॥

तत्र सम्बन्धमात्रस्य विवाहप्रयोजकत्वम् ॥ १५ ॥

सुप्तायाः प्रमत्ताया वा चौर्येण हरणं पैशाचमाहुः ॥ १६ ॥

तमविवाहमेव वासिष्ठो मन्यते ॥ १७ ॥

तस्मात्कन्यामपहर्तुराच्छिद्य पुनरन्यस्मै प्रतिपादयेत् ॥ १८ ॥

न चेद्गर्भिणीत्येके ॥ १९ ॥

न चेद्दूषितेत्यपरे ॥ २० ॥

तदुभयमपि यदि कन्यानुमते तदैव प्रतिबन्धायेति वासिष्ठः ॥ २१ ॥

नानुमन्यते चेद्गर्भे शिशुमपहर्त्रे दत्वा तामन्यस्मै प्रतिपादयेत् ॥ २२ ॥

दूषिता चेत् प्रायश्चित्तं शरीरशुद्धये कृत्वा ॥ २३॥

**अथ द्वितीयः खण्डः**

दैवो ब्राह्मणानामेव तेषामेवार्त्विज्यसम्भवात् ॥ १॥

आर्षश्च गवादिप्रतिग्रहीतृत्वाधिकारस्तेषामेव हि ॥ २॥

स गोमूल्यत्वाद्विक्रय एवेति चेन्न तत्र दानस्मरणात् ॥ ३॥

राक्षसो राक्षसगान्धर्वश्च वीर्यवतां राज्ञामेवोपपद्यते ॥ ४॥

क्षत्रियाणामेव तौ धर्म्यौ प्राञ्चः ॥ ५॥

मिथोयोगगान्धर्वं च ॥ ६॥

आसुर आर्याणां गर्हितः ॥ ७॥

ब्राह्मप्राजापत्यस्वयंवरगान्धर्वाः सर्वेषां पूजिताः ॥ ८॥

न ब्राह्मणानां तृतीय इत्येके ॥ ९॥

तत्र निषेधवचनं सामान्यतो दृश्यमानं मिथोयोगपरं प्रशंसावचनं स्वयंवरपरं वचनयोरेवं सामरस्यादिति वासिष्ठः ॥ १०॥

मानुषालङ्कारशुल्कौ सर्वेषामनिन्द्यौ ॥ ११ ॥

वीर्यशुल्कः स्वयंवरगान्धर्ववत् ॥ १२ ॥

स्त्रीणां नियतकालविक्रयः पण्यत्वेन स्थितिर्वा न विवाहः ॥ १३ ॥

## अथ तृतीयः खण्डः

स्त्रीणां न प्रागृतोर्विवाहो रागानुदयादित्येके ॥ १ ॥

प्रतिज्ञाया असमयात् ॥ २ ॥

अन्यकृता तु न बध्नाति ॥ ३ ॥

वैवाहिकमन्त्रलिङ्गेभ्यः ॥ ४ ॥

त्रिरात्रादूर्ध्वं समावेशनाभ्यनुज्ञानलिङ्गात् ॥ ५ ॥

अदृष्टर्तुकयापि समावेशः संस्कारार्थ इति चेन्नाश्वलायनेन निषिद्धत्वात् ॥ ६ ॥

जैमिनिधर्मस्मृतौ नग्निकायाः पर्युदासात् ॥ ७ ॥

ऋतुदर्शने पित्रादेः पातित्यस्मरणान्नेति चेन्न स्मृत्यन्तराद्बलवतो रजोदर्शनादपि पश्चात् त्रीणि वर्षाणि पितुर्दानाधिकारव्यक्तेः ॥ ८ ॥

वर्षत्रयादूर्ध्वं वा कन्यायाः स्वयंवरणाधिकार एव स्मर्यते न कस्यचित्पातः ॥९॥

पितुर्लोभस्यावकाशात् ॥१०॥

विद्याप्रतिबन्धकत्वात् ॥११॥

सङ्गदौर्बल्यहेतुत्वात् ॥१२॥

पूर्वेषामनाचारात् ॥१३॥

माभूवन्ननाथाः प्रायेणेति ॥१४॥

नित्यकन्यात्वोच्छेदप्रसक्तेः ॥१५॥

न चेष्टापत्तिर्मान्त्रवर्णिकाल्लिङ्गादाचाराच्च ॥१६॥

पश्चाद्दतोरूढानामन्यत्र सुखस्यैव दर्शनात् ॥१७॥

वोढुः कतिचिद्वर्षाण्यनाश्रमत्वप्रसङ्गात् ॥१८॥

## अथ चतुर्थः खण्डः

प्रागेवर्तोरित्यन्ये नियमनिबन्धनो हि विवाहो न रागनिबन्धनः ॥१॥

अनुरागस्य प्रथमाश्रमविरुद्धत्वान्न ह्युत्तरोनुरागादिः ॥ २॥

परस्परानुरागो नाधर्मायेति चेन्न युगपत्तदुदयस्य मातुमशक्यत्वात् ॥ ३ ॥

कन्याया अनुरागो विवाहस्य प्रतिष्ठानैवमुभयथा विरोध इति चेत्कन्यागुणान्वेषणानर्थक्यम् ॥ ४ ॥

दानस्याङ्गमेव प्रतिज्ञा ॥ ५॥

दत्तैव सहोपासीत न प्रत्यजानामीति ॥ ६ ॥

अङ्गाङ्गिकालविप्रतिषेधेऽङ्गिनो बलीयस्त्वात् ॥ ७ ॥

तस्य चानुमितिर्गौतमधर्मस्मृतेः ॥ ८ ॥

विमतनिन्दास्मृतिभ्यश्च ॥ ९ ॥

विमतेरागस्वाम्ययोः कलहाद्दानस्य पाप्मविद्धत्वमुच्छेदो वा ॥ १० ॥

वैवाहिकमन्त्रलिङ्गानां प्रत्यक्षस्मार्तविधिनिषेधाभ्यां बाधितत्वात् ॥ ११ ॥

श्रौताल्लिङ्गान्न स्मार्तादेशो बलीयानिति चेत् ॥ १२ ॥

मैवमादित्यस्य वारुणीभिरुपस्थानात् ॥ १३ ॥

वरुणस्याप्यादित्यत्वादविरोधत एव वारुणीभीरात्रेरुपस्थानम् उपदिशन् बौधायनः सङ्गच्छत इति चेत् ॥ १४ ॥

अन्यदैवत्याभिरङ्गारकाद्युपस्थानं तर्हि भवत्युदाहरणम् ॥ १५ ॥

समावेशनविधे ब्राह्मणेष्वनाचारादन्यविषयत्वम् ॥ १६ ॥

सर्वत्रापठिततत्वाच्च ॥ १७ ॥

अनियतत्वादपि ॥ १८ ॥

ब्राह्मणेष्वपि यत्राचर्यते स निषेको न गर्भाधानम् ॥ १९ ॥

उभयं विनापि मन्त्रपठनाचारः संस्कारार्थः ॥ २० ॥

गर्भाधानादन्यत्र मन्त्रपठनमनर्थकमिति चेन्न भाविदृष्टेः ॥ २१ ॥

संस्कारार्थादन्यत्राश्वलायनस्य निषेध उत्सर्गात् ॥ २२ ॥

अनग्निकामिति निषेधो वा सोग्रहणात्प्रागेव ॥ २३ ॥

नग्निञ्का तु श्रेष्ठेति गोभिलस्मृतेरतिबालाविवाहप्रसक्तिरिति चेत्तत्र नग्निकापदमनागतार्तवापरम् ॥ २४ ॥

वर्षत्रयोदीक्षणमापद्धर्मः ॥ २५ ॥

अनापदि प्रागृतोरप्रदाने पात एव पित्रादीनां स्मृत्यन्तरेभ्यः ॥ २६॥

लोभी पिता सङ्घेन नियम्यः ॥ २७॥

न विद्याप्रतिबन्धको विवाहो निषेधादर्शनात् ॥ २८॥

हितान्वेषणे तु पितृकुलाच्छ्वशुरकुलं न दवीयः ॥ २९॥

सङ्घदौर्बल्यं स्त्रीणां गर्भाधानयोग्यस्य वयसोऽनन्वेक्षणात् ॥ ३०॥

आधातॄणामप्रौढत्वाच्च ॥ ३१॥

अस्ति पूर्वेषामाचारो यथा शृणुम उषस्तेः कथायाम् ॥ ३२॥

नित्यकन्याचारो लैङ्गिकस्तन्निन्दायामेव ॥ ३३॥

ऐतिहासिकश्चान्यत्र ॥ ३४॥

सङ्घान्तरे सुखं शपथमात्रमुताहो अनिर्धारितहेतुकम् ॥ ३५॥

आश्रमो न भोगायत्तः ॥ ३६॥

कर्माणि तु जायायाः प्रौढिं नापेक्षन्ते ॥ ३७॥

क्षत्रियादीनां तु पश्चाद्दतोरपि गान्धर्वादेरभ्यनुज्ञा ॥ ३८॥

## अथ पञ्चमः खण्डः

ब्राह्मणानामपीति वासिष्ठः ॥ १॥

तेषामपि गान्धर्वस्य विहितत्वात् ॥ २॥

मानुषाख्यस्य चागर्ह्यत्वात् ॥ ३॥

काङ्क्षितशुल्कं विनेतरस्य चासुरस्य ॥ ४॥

ब्राह्मादिचतुष्के यद्दानं तद्दतोरनन्तरं त्रीणि वर्षाणि सप्रायश्चित्तम् ॥ ५॥

प्रायश्चित्ताभाव एव पित्रादीनां पातः ॥ ६॥

प्रायश्चित्तापनोद्यमेव वृषलीत्वमपि दृष्टरजसः संस्कारात्प्रागार्येषु ॥ ७॥

गान्धर्वेपि वृषलीत्वप्रायश्चित्तं कार्यमेव त्रैवर्णिकेषु ॥ ८॥

नित्यं स प्रायश्चित्तत्वादधर्म्य एव गान्धर्वः प्रसज्येतेति चेन्न शरीरमात्रसम्बन्धित्वाद्दोषस्य विहितकालानुषक्तस्य ॥ ९॥

ऋतोः पश्चाद्वर्षत्रयादूर्ध्वं न वृषलीत्वस्य प्रायश्चित्तमिति चेन्न मनुविरोधापत्तेः ॥ १०॥

वृषल्याः सदृशः पतिर्हि दुर्लभः ॥ ११॥

**अथ षष्ठः खण्डः**

एकादशमारभ्य रजस्वला गण्यते पराशरधर्मस्मृतेरित्येके ॥ १॥

मैवं द्वादशे दानविधेः प्रबलात् ॥ २॥

एकादशाब्दमात्रे पारिभाषिकरजस्वलापदम् ॥ ३॥

स्त्रीणां विवाहस्योपनयनस्थानीयत्वाद्ब्राह्मणकन्यानामाषोडशं संस्कारकालो मुख्य इत्येके ॥ ४॥

एतेन क्षत्रियवैश्यकन्ययोश्च संस्कारकालो व्याख्यातः ॥ ५॥

ऋतुपदस्य संस्कारकालात्ययोपलक्षकत्वम् ॥ ६॥

दन्तजनकालादिष्वप्येवमेव नियतसमयस्वीकारात् ॥ ७॥

तत्तत्कालान्तरमेव वर्षत्रयोदीक्षणम् ॥ ८॥

ऋतुमतीपदमजहल्लक्षणया षोडशादिवर्षामनृतुमतीमपि बोधयति न तु तत्पूर्वं दृष्टरजसं जहातीति वासिष्ठः ॥ ८॥

दृष्टोन्तोपपत्तिश्चैवम् ॥ १०॥

## अथ सप्तमः खण्डः

प्रागृतोः कन्योपनीता चेद्विवाहकालस्तस्याः पुंसामिव यथाभीष्टः ॥ १॥

संस्कारपरत्वात्कालनियमस्य ॥ २॥

स्त्रीणामुपनयनेऽध्ययनप्रसक्तिरितिचेदिष्टापत्तिः ॥ ३॥

तवापि विवाहस्योपनयनस्थानीयत्वात्तत्प्रसक्तिर्दुर्निवारा ॥ ४॥

## अथाष्टमः खण्डः

अन्यदूषिताया अप्युद्वाहः सहोढकानीनयोः पुत्रत्वेन स्मरणात् ॥ १॥

मैवं येन दूषिता तेनैव सा वोढव्या ॥ २॥

तर्हि सहोढकानीनयोरौरसात्पृथगुपदेशानुपपत्तिरिति चेन्न तयोरसंस्कृताजातत्वात्पृथगुपदेशोपपत्तेः ॥ ३॥

अन्यश्चेद्वोढा सा पुनर्भूवत् ॥ ४॥

पूर्वस्माज्जातमपत्यं पूर्वस्यैव तदा ॥ ५॥

वसिष्ठस्यर्षेर्मन्त्रदृष्टेः ॥ ६॥

अन्यथा व्यासस्य शान्तनवत्वापत्तिः ॥ ७॥

तव मते विचित्रवीर्यस्य पौनर्भवत्वापत्तिरिति चेत्तदिष्टम् ॥ ८॥

क्षेत्रिपराणि वचनानि क्षेत्रजविषयाणीति व्यवस्था ॥ ९॥

**अथ नवमः खण्डः**

दत्तायाः पुनर्न दानम् ॥ १॥

विपन्नपतिकाया अक्षतायास्तु न निषिद्धमिति पूर्वे ॥ २॥

क्षता चेद् भूयो भर्तृकामिनी पूर्वस्य भर्तुर्भ्रातृस्थानीयं ज्ञातिमेव गान्धर्वेण विधिना वृणुयात् ॥ ३॥

मान्त्रवर्णिकलिङ्गप्रामाण्यात् ॥ ४॥

पौनर्भवस्मृतिलिङ्गाच्च ॥ ५॥

ब्राह्मादिचतुष्कविधिना पूर्वं परिणीताया एवैष नियमः ॥ ६॥

विध्यन्तरपरिणीता तु भर्तरि विपन्ने भूयो भर्तृकामिनी भर्तुरज्ञातिमप्यन्यं परिणयार्हं वृणुयात् ॥ ७॥

उभयत्रापि भूयो विवाहमनिच्छन्ती या तपसा कालं नयेत्सा पूज्यतमा ॥ ८॥

## अथ दशमः खण्डः

पुनर्विवाहे स्त्रीणां न संस्कारः पुनरित्येके ॥ १॥

अस्तीति वासिष्ठः पुनर्भूशब्दार्थलिङ्गात् ॥ २॥

## अथ एकादशः खण्डः

संस्कारो द्विविधो विवाहप्रयोजको गृहस्थाश्रमकर्मारम्भकश्चेति तौ प्रधानप्रवेशहोमावाचक्षते ॥ १॥

मिथोयोगगान्धर्वेष्यस्त्येव द्वितीयः ॥ २॥

## अथ द्वादशः खण्डः

संस्कर्तरि भर्तरि जीवत्येव या पुरुषमन्यं श्रयते तत्र पुनर्भूपदं भाक्तम् ॥ १॥

स एवोपपातकिषु गण्यते पुमान् ॥ २॥

पूर्वभर्तृसहपाठलिङ्गात् ॥ ३॥

जीवत्यपि नष्टे प्रव्रजिते क्लीबे पतिते च न दोष इत्येके ॥ ४॥

## अथ त्रयोदशः खण्डः

सर्वः सवर्णामुद्वहेदित्युत्तमः पक्षः सर्वमतेन ॥ १॥

असवर्णाविवाहेष्वनुलोमप्रकारः पूर्वेषामगर्हितः ॥ २॥

प्रतिलोमप्रकारो गर्हितः ॥ ३॥

अनुलोमश्चैकजातिजा चेत्कन्या गर्हित एव केषाञ्चित् ॥ ४॥

अगर्हितः सर्वसंस्कारपक्षे ॥ ५॥

प्रतिलोमश्चेद्गर्हितोऽनुलोमोऽपि तथा वासिष्ठस्य ॥ ६॥

उभयत्रापि वर्णसंस्कारस्य तुल्यत्वात् ॥ ७॥

न्यूनाधिकत्वभावविषयदर्शनाच्च ॥ ८॥

तस्मात्सवर्णामेवोद्वहेत् ॥ ९॥

इत्येकपञ्चाशदुत्तरेण शतेन सूत्राणां विवाहधर्मः सूत्रितो भवति ॥ १०॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनो-
र्गणपतिमुनेः कृतिर्विवाहधर्मसूत्रं समाप्तम् ॥

# शब्दप्रमाणचर्चा

## १. वेदप्रामाण्याधिकरणम्

वेदाः प्रमाणमाप्तवाक्यत्वादेकेषाम् ॥ १॥

ईश्वरवाक्यत्वादपरेषाम् ॥ २॥

अकृतकत्वेन दोषाप्रतिष्ठानादितरेषाम् ॥ ३॥

**तृतीयमते दोषाः**

विप्रतिषिद्धमिदं यदकृतकानि वाक्यानि ॥ ४॥

कर्तुरनुपलब्धेर्वेदवाक्यानकृतकानीति चेन्न मधुच्छन्दप्रभृतीनाम् उपलब्धेः ॥ ५॥

प्रवचनादाख्या इति चेत्परिहार एवायं कारणान्तरेण चेत् सिध्यति नित्यत्वम् ॥ ६॥

इतरेतराश्रयश्च नित्यत्वाख्यागौणत्वयोः ॥ ७॥

वचनप्रामाण्यान्नित्यत्वमिति चेदेवमपीतरेतराश्रयो नित्यत्वप्रमाणत्वयोः ॥ ८॥

दृश्यन्ते चानित्यत्वे वचनानि ॥ ९॥

यज्ञादिति नारायणस्यार्षे मन्त्रे ॥ १०॥

स्वस्य शक्त्या विदावेति हिरण्यस्तूपस्य ॥ ११॥

हृदा तष्टा इति पराशरस्य ॥ १२॥

स्पष्टमात्मकृतिख्यानं बहूनामृषीणाम् ॥ १३॥

नित्यत्वे तु विरूपस्यैकस्य ॥ १४॥

एवं निगमानां वैधसत्वे पारमर्षत्वे नित्यत्वे च वचनानि भवन्ति ॥ १५॥

अन्यतमस्य मुख्यत्वं शेषयोर्गौणत्वं च निर्धारयितुं वाक्यतत्त्वमेव विचारयितव्यं स्यात् ॥ १६॥

वाक्यस्य वक्तृसापेक्षत्वान्नित्यत्वप्रातिकूल्यं निसर्गात् ॥ १७॥

शब्दस्य नित्यत्वान्नेति चेत्तद्वर्णाभिप्रायम् ॥ १८॥

पदान्यपि नित्यान्याहुर्वैयाकरणा इति चेल्लौकिकानां च नित्यत्वं स्यात् ॥ १९॥

अनित्यार्थसंयोगान्नेति चेदेकदेशपरिहार एवायम् ॥ २०॥

अनित्यत्वापत्तिश्च वैदिकेष्वेकदेशे ॥ २१॥

तच्छ्रुतिसामान्यमात्रमिति केवलः प्रौढिवादः ॥ २२॥

परःसहस्राणि पदानि प्रसिद्ध्यव्यतिरेकेण प्रकरणाविरोधेन च युष्माभिर्व्याख्येयानि स्युः ॥ २३॥

तावदेषा युक्तिर्न शोभते यावदसम्पूर्णं वो व्याख्यानम् ॥ २४॥

द्वित्रिपदव्याख्यानान्न चरितार्थता ॥ २५॥

दृष्टानि भवदीयानामेव व्याख्यानानि भवतां प्रतिकूलानि ॥ २६॥

विरोधश्चायंयथावत्परिहृतोप्यकिञ्चित्करः कृतकत्वाप्रतिद्वन्द्वित्वात्परिहारस्य ॥ २७॥

बन्धस्य कृतकत्वे वर्णानित्यत्वापत्तिर्न स्यात् ॥ २८॥

**द्वितीयमते दोषाः**

पारमेश्वरत्ववादोप्यसमञ्जसः प्रार्थनाभिशापावरस्तुत्यादिभ्यः ॥ २९॥

परार्थमिति चेत्सामान्यार्थाभिप्रायत्वान्न विशेषनिर्देशः कार्यः ॥ ३०॥

परिमितकालकथायोगाच्च ॥ ३१॥

ऋष्याख्यानुकूलत्वेन व्यवस्थिताभ्यां भाषागतिभेदसादृश्याभ्याम् ॥ ३२॥

वक्तृभेदपरिहार्येभ्यश्च पुनरुक्तिदोषेभ्यः ॥ ३३॥

अहमर्थान्वितानामज्ञानादीनां चानुपपत्तेः ॥ ३४॥

यस्य वाक्यं स ऋषिरिति वदन्तः प्राञ्चो मधुच्छन्दः प्रभृतीन् एवोदाहरन्ति ॥ ३५॥

नेश्वरं हि ॥ ३६॥

**आद्यमते दोषाः**

आप्तवाक्यत्वात्प्रामाण्यं गुणसापेक्षं दोषाभावसापेक्षं वा वक्तुः ॥ ३७॥

तन्निर्धारणाय कश्चित्साधारणो हेतुरपेक्षितः ॥ ३८॥

प्रमाणान्तरप्रमितानुवादकत्वं चेत्तदसंवादे वैदिकवाक्याप्रमाण्यं स्यात् ॥ ३९॥

तादृशलौकिकवाक्यानां वेदत्त्वापत्तिश्च ॥ ४०॥

तुल्यबलत्वापत्तिर्वा ॥ ४१॥

ईश्वरलब्धानुवादकत्वमिति चेत्कामक्रोधाद्यप्रसक्तिः ॥ ४२॥

तस्मान्नैते हेतवो भवन्ति ॥ ४३॥

**सिद्धान्तः**

दर्शनत्वात्तु गणपतेर्वासिष्ठस्य ॥ ४४॥

## २. दर्शननिर्वचनाधिकरणम्

दर्शनं यत्समष्टेः करणेन स्वकीयेनेव स्वहृदये परत्र वा गुप्तमर्थमृषिः पश्यति ॥ ४५॥

वाक्यात्मना तस्याभिव्यक्तिर्वेदः ॥ ४६॥

ज्ञानस्य शब्दात्मना कथमभिव्यक्तिरिति चेदविशेषात् ॥ ४७॥

अव्यक्तं शब्दायत इत्येव यज्जानातीति ॥ ४८॥

समष्टेः करणं व्यष्टेः स्वंस्यात्तपोबलाद्यथा परयत्नाद्योगनिद्रायाम् अधुना लोके ॥ ४९॥

काणादादिषु दर्शनव्यवहारो भाक्तः ॥ ५०॥

## ३. द्विरूपशब्दाधिकरणम्

आप्तवाक्यं दर्शनं च पृथगेव प्रमाणे ॥ ५१ ॥

प्रत्यक्षानुमानादिप्रमितानुवाद आप्तवाक्यम् ॥ ५२ ॥

वेदार्थानुवादश्च ॥ ५३ ॥

अपरोक्षप्रमिताभिव्यक्तिदर्शनं यस्य वेदाख्या ॥ ५४ ॥

यद्यप्यपरोक्षमेव दर्शनं तथापि तदभिव्यक्तिरूपे वाक्ये तदभेदः ॥ ५५ ॥

## ४. प्रसिद्ध्यधिकरणम्

प्रसिद्धिर्वेदानां दर्शनत्वावगतिः ॥ ५६ ॥

प्रसिद्धिरिह परम्परानुधाविन आप्तवाक्यान्नातिरिच्यते ॥ ५७ ॥

ननु ऋषेर्दर्शनमितरस्याप्रत्यक्षम् ॥ ५८ ॥

यच्छ्रोत्रप्रत्यक्षं तदितराविशेषम् ॥ ५९ ॥

अनुमितये नानैकान्तिकलिङ्गलाभः ॥ ६० ॥

वैदिकीति चेद्दर्शनत्वप्रामाण्ययोरितरेतराश्रयः ॥ ६१ ॥

तस्मान्न प्रसिद्धिः प्रमाणमिति चेत् ॥ ६२॥

ऋषिरात्मनोऽभिव्यक्तं वाक्यं विलक्षणप्रादुर्भावत्वाद्यद्दर्शनं प्रकटयति तत्प्रसिद्धिमूलमाप्तवाक्यम् ॥ ६३॥

अतपा असमाहितोऽननुभूतवाङ्मूलो न मन्त्रद्रष्टा स्यात्तादृशो-ऽहमद्राक्षमिति वदन्ननृतवचनोऽनुमातुं शक्यः ॥ ६४॥

दर्शनत्वप्रसिद्धिपोषिकैव वेदानां पारमेश्वरत्वप्रसिद्धिः ॥ ६५॥

प्रत्याख्यातं भवता तदिति चेत्तत्सर्वथा पारमेश्वरत्वनिरासार्थम् ॥ ६६॥

## ५. पारमेश्वरत्वाधिकरणम्

वेदाः काव्यानि वेधस उच्यन्ते करणस्य तदीयत्वात् ॥ ६७॥

## ६. आर्षत्वाधिकरणम्

ऋषीणां भण्यन्ते तेषां द्रष्टृत्वात् ॥ ६८॥

## ७. सोपाधिकत्वाधिकरणम्

अभिव्यक्तौ सन्निकृष्टशब्दोपाधिकत्वमिष्टम् ॥ ६९॥

उपाधिरत्र घट इव मृद आकृतिविशेषो नार्थान्तरम् ॥ ७० ॥

अभिव्यञ्जकत्वे समष्टेः शक्तिर्व्यष्टेर्व्युत्पत्तिरित्युक्तं भवति ॥ ७१ ॥

एतेन भाषागतिभेदसादृश्ये व्याख्याते ॥ ७२ ॥

## ८. कामादिप्रतिबिम्बितत्वाधिकरणम्

कामादिः समष्टावनुपपन्न इति चेद् व्यष्टेरेवायं प्रतिबिम्बितः ॥ ७३ ॥

समष्टिविज्ञानचक्षुषा व्यष्टिविज्ञानप्रतिबिम्बानां च दर्शनमविरुद्धम् ॥ ७४ ॥

व्यष्टिदर्शनकर्ताऽन्यो वा ॥ ७५ ॥

भ्रमसंशययोश्च प्रतिबिम्बितत्वापत्तिरिति चेत् ॥ ७६ ॥

अप्रमाभूमिकत्वादबाधः ॥ ७७ ॥

एतेनाज्ञानप्रतिबिम्बनं व्याख्यातम् ॥ ७८ ॥

## ९. नित्यत्वाधिकरणम्

वेदाः प्रणवे घटा इव मृदि स नित्यः ॥ ७९ ॥

तन्मूला वेदनित्यत्वप्रसिद्धिः ॥ ८०॥

ऋचो अक्षरे परमे व्योमन्निति भगवत औचथ्यस्य दीर्घतमसो दर्शनमत्र भवति ॥ ८१॥

अविभक्ततया प्रणवे वेदाः ॥ ८२॥

विभक्ततया दर्शनेषु ॥ ८३॥

सर्वाणि ज्ञानान्येवमिति चेन्न व्यष्ट्यन्तःकरणैर्व्यवधानात् ॥ ८४॥

व्यष्ट्यन्तःकरणे स्मरणबीजानुभवा इव समष्टिकरणे वेदबीजानुभवाः स्युः सा स्थितिरविभक्ता ॥ ८५॥

समष्टिकरणं च प्रणवान्नातिरिच्यते ॥ ८६॥

## १०. दर्शनभेदाधिकरणम्

विभक्ततया प्रादुर्भावे व्यष्टिज्ञानप्रतिबिम्बरहितं शुद्धम् ॥ ८७॥

तत्सहितं मिश्रम् ॥ ८८॥

यद्यप्यनुभावप्रामाण्ययोरुभयं तुल्यं तथाप्युत्तरत्रानित्यार्थसंयोग इति पूर्वं ज्यायः ॥ ८९॥

## ९. वेदपदप्रवृत्तिनिमित्ताधिकरणम्

ऋचो यजूंषि सामान्यथार्वाङ्गिरसश्च वेदपदप्रवृत्तिनिमित्तं तैरेव विशेषितत्वाद्वेदपदस्य ॥ ९० ॥

ब्राह्मणानि चेत्येके ॥ ९१ ॥

नादर्शनत्वादिति कपाली भारद्वाजः ॥ ९२ ॥

काव्यादिवदेव ब्राह्मणवाक्यनिर्माणं हि ॥ ९३ ॥

तत्र शक्तिव्युत्पत्ती उभे अपि व्यष्टेरेवेत्युक्तं भवति ॥ ९४ ॥

तथापि तत्र कर्मणां भावानां चये विधयस्तद्वाक्यार्थास्तु दर्शनान्येवर्षीणामिति गणपतिर्वासिष्ठः ॥ ९५ ॥

निषेधानां च विधिषु सङ्ग्रहः ॥ ९६ ॥

मन्त्रदर्शनेषु वाक्याविर्भावपर्यन्ता समष्टिशक्तिलीला ब्राह्मणस्य विधिदर्शनेषु तदर्थस्फुरणपर्यन्तेति विशेषः ॥ ९७ ॥

वाक्यकरणमृषेरन्यस्य वा श्रुत तदर्थस्य ॥ ९८ ॥

तस्माद्ब्राह्मणानां वेदत्वं नासङ्गतं यावद्दर्शनत्वम् ॥ ९९ ॥

तेषामादेशाख्या ॥ १०० ॥

शब्दवैलक्षण्यादवेदत्वमेव तेषामिति चेन्मास्तु जपादौ विनियोगस्तेषाम् अपरोक्षदर्शनत्वं को निवारयेत् ॥ १०१॥

## १२. आदेशप्रामाण्यस्वरूपाधिकरणम्

आदेश आप्तवाक्यं स्यादनुवादत्वादिति चेत् ॥ १०२॥

नैवं स्याद्वाक्यस्य तुल्यार्थं वाक्यं ह्यनुवादः ॥ १०३॥

ज्ञानस्य वाक्येन प्रकटनमन्यत् ॥ १०४॥

प्रत्यक्षानुमानप्रमितप्रकटनेषु विषयलिङ्गसन्निधावननुवादत्वं तदसन्निधौ त्वनुवादत्वं स्यात् ॥ १०५॥

बाह्यविषयलिङ्गानायत्तत्वादपरोक्षं दर्शनमितो विलक्षणम् ॥ १०६॥

तत्प्रकटनात्मनामादेशानां तद्वदेव प्रामाण्यं युक्तम् ॥ १०७॥

## १३. शेषब्राह्मणाधिकरणम्

शेषो ब्राह्मणमात्रम् ॥ १०८॥

तत्रार्थोप्यादेशोपबृंहकः पुरुषबुद्धिविलासः ॥ १०९॥

तस्य वेदपदेन व्यवहारो वेदानुबन्धित्वात् ॥ ११०॥

तत्र भूतार्थवादः स्यादाप्तवाक्यम् ॥ १११ ॥

स हि स्वार्थमजहन्नितरार्थः ॥ ११२ ॥

अन्यस्य केवलमितरार्थत्वान्न पृथक्प्रामाण्यम् ॥ ११३ ॥

शेषब्राह्मणेन गाथानाराशंस्यो व्याख्याताः ॥ ११४ ॥

## १४. उपनिषदधिकरणम्

उपनिषद्रहस्यपर्यायः ॥ ११५ ॥

तत्पदं वैदिकतान्त्रिकस्मार्तरहस्यग्रन्थसाधारणम् ॥ ११६ ॥

पठनपाठनस्थवेदशाखानुबद्धा उपनिषदो वैदिक्यः ॥ ११७ ॥

अन्याश्च याभ्यो विषयवाक्यानि साक्षाद्गृहीतानि बादरायणेन ॥ ११८ ॥

ताः किल खिलवेदशाखानुबद्धाः ॥ ११९ ॥

परिशिष्टास्तान्त्रिकस्मार्तरहस्यग्रन्थान्यतरतां भजन्ते ॥ १२० ॥

वैदिक्यो वेदशाखानुबद्धत्वोक्तेरिति चेन्न गतिभेदात् ॥ १२१ ॥

उक्तिस्तु प्ररोचनार्था ॥ १२२ ॥

## १५. स्मृत्यधिकरणम्

स्मृतिर्लिङ्गं दर्शनस्य स्मर्तॄणां वेदार्थानुवादकत्वसम्भवात् ॥ १२३ ॥

दोषसम्भावना प्रत्यक्षदर्शनविरोधश्च तदनुमापकत्वप्रतिबन्धायैकैकशः ॥ १२४ ॥

रागो द्वेषो वा दोषः ॥ १२५ ॥

दृष्टहेतुकस्मार्तधर्माणां समयाचारमात्रत्वम् ॥ १२६ ॥

वैदिको धर्मोऽन्यः सनातनः ॥ १२७ ॥

सङ्गनिबन्धनात्समयाचाराणां ग्राह्यत्वं न प्रामाण्यात् ॥ १२८ ॥

उत्तरोत्तरापोद्या अनित्याः खलु ते ॥ १२९ ॥

मन्वादि महापुरुषोक्तत्वादस्ति तेषामव्याहतं प्रामाण्यमिति चेत् कल्पितो हेतुः ॥ १३० ॥

मन्वत्रिकाव्यकश्यपदेवलनारदबृहस्पतियमप्रजापतिवसिष्ठपराशराणां निरपेक्षदर्शनशालिनां परदर्शनसापेक्षं वक्तृत्वमश्रद्धेयम् ॥ १३१ ॥

अस्ति भाषाभेदश्च महान् ॥ १३२ ॥

एतेनादेशवतो याज्ञवल्क्यस्य स्तृतिकारत्वं च व्याख्यातम् ॥ १३३ ॥

अङ्गिरोदक्षसंवर्तादीनामनुपलब्धदर्शनानामपि मन्वादिवत्प्राचां स्मृतिकारत्वं च महताम् ॥ १३४ ॥

भृगोश्च प्राचो दर्शनवतो मनुधर्मसंहिताकारत्वम् ॥ १३५ ॥

विष्णुश्चेद्धर्मसंहिताकारः सा निरपेक्षा वेदसंहितास्यान्न स्मृतिस्तद्विज्ञानस्य नित्यं समष्टिकरणानुगृहीत्वात् ॥ १३६ ॥

तस्मान्मन्वादिनामाङ्किताः स्मृतयो न तदुक्तयः ॥ १३७ ॥

अन्य एव तत्कर्तारोऽन्तर्हितस्वनामानः ॥ १३८ ॥

प्राचीनकरणोक्तिः प्ररोचनार्था ॥ १३९ ॥

## १६. प्रामाण्यतत्त्वाधिकरणम्

ज्ञानस्य प्रामाण्यमप्रामाण्यं वा स्वत एवेत्येके ॥ १४० ॥

अन्येषां न स्वतो द्वयं परस्परविरुद्धत्वात् ॥ १४१ ॥

नवा व्यक्तिभेदो ज्ञानस्य प्रमाणत्वेऽप्रमाणत्वे चैकरुपत्वात् ॥ १४२ ॥

भेदेनाविभज्यनिरुपयितुमशक्यमनपेक्षत्वात् ॥ १४३ ॥

परतश्च न द्वयं ज्ञानस्य निःस्वभावप्रसङ्गादिति चेत् ॥ १४४ ॥

कारणगुणावधारणात्प्रामाण्यम् ॥ १४५॥

कारणदोषावधारणादप्रामाण्यम् ॥ १४६॥

इतरेषां ज्ञानस्य स्वतः प्रामाण्यमन्यथाऽनवस्था प्रसङ्गात् ॥ १४७॥

अप्रामाण्यं कारणदोषावधारणात् ॥ १४८॥

परेषां सर्वं च ज्ञानं प्रमाणं प्रमाणस्य ज्ञानपर्यायत्वात् ॥ १४९॥

बलवता बलहीनस्य बाधः ॥ १५०॥

बाधितं मिथ्याज्ञानसंज्ञां मिथ्याप्रमाणसंज्ञां वा भजते ॥ १५१॥

अन्यदप्रमाणत्वं मिथ्याप्रमाणत्वात् ॥ १५२॥

अग्रहणं पूर्वम् ॥ १५३॥

यावदग्रहणमधिकग्रहणं वा परम् ॥ १५४॥

विपरीतग्रहणं वा ॥ १५५॥

## १७. अपरोक्षप्राबल्याधिकरणम्

निर्दुष्टसर्वशक्तिमत्समष्टिकरणानुगृहीतत्वादपरोक्षाणां दर्शनानामितरेभ्यः

प्रबलं प्रामाण्यम् ॥ १५६॥

तेषां तु परस्परं तुल्यबलत्वम् ॥ १५७॥

## १८. उपसंहाराधिकरणम्

शब्दस्य ज्ञानानुवादत्वान्नामूलकत्वम् ॥ १५८॥

दोषाभावेन चोदनानां भूतभव्यात्मनां प्रामाण्यं न दोषाप्रतिष्ठानात् ॥ १५९॥

प्रौरुषेयत्वप्रसङ्ग इति चेद्विकारनित्यत्वप्रसङ्गोऽन्यथा ॥ १६०॥

शब्दस्य नित्यत्वान्नेति चेल्लौकिकवाक्येष्वप्येष न्यायः ॥ १६१॥

तवाप्यविशेषप्रसङ्ग इति चेत् ॥ १६२॥

अपरोक्षप्रमितस्य प्रापको वैदिकः शब्दः ॥ १६३॥

प्रत्यक्षादिप्रमितस्य लौकिकः ॥ १६४॥

अपरोक्षस्य नित्यमदुष्टत्वान्न मिथ्याप्रामाण्यशङ्का ॥ १६५॥

सैषा पञ्चषष्ट्युत्तरेण शतेन सूत्राणां शब्दप्रमाणचर्चा भवति ॥ १६६॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनोः
गणपतेः कृतिः शब्दप्रमाणचर्चा समाप्ता ॥

# जैमिनीयतर्कवार्तिकम्

अग्नये ज्योतिषे नम इन्द्राय ज्योतिषे नमः सूर्याय ज्योतिषे नमः ॥१॥

अथातो जैमिनीये तन्त्रे तर्कपादं व्याख्यास्यामः ॥ २॥

तत्रादौ तन्त्रारम्भाधिकरणम् ॥ ३॥

*॥ अथातो धर्मजिज्ञासा ॥ सूत्रम् १ ॥*

॥ पूर्वपक्षः॥ स्वाध्यायाध्ययनादनन्तरमधीतः स्वाध्यायोऽनर्थको माभूदिति हेतोर्गुरुकुलादसमावृत्तेन धर्मविचारः कर्तव्य इत्येकेषां व्याख्यानम् ॥ ४॥

पूर्ववृत्तं स्वाध्यायाध्ययनमथशब्देनाक्षिप्तं स्यात् ॥ ५॥

तदात्मना हेत्वर्थे समन्वितं भवेत् ॥ ६॥

अध्ययनादनन्तरं धर्मविचारस्थसिद्धत्वात्तत्समाप्तिपर्यन्तं गुरुकुलादसमावर्तनं सिद्धं स्यात् ॥ ७॥

अध्ययनविधेरेव धर्मविचारस्य तदानन्तर्यसिद्धिः ॥ ८॥

धर्मविचारमन्तराऽध्ययनस्य निष्फलत्वापत्तेः ॥ ९ ॥

तस्यादृष्टार्थत्वान्नेति चेद्दृष्टे प्रयोजनेनादृष्टकल्पनं न्याय्यम् ॥ १० ॥

तच्च दृष्टं प्रयोजनमर्थग्रहणम् ॥ ११ ॥

वेदार्थश्च धर्मान्नातिरिच्यते ॥ १२ ॥

स च विचारं विना यथावन्न गृहीतो भवेत् ॥ १३ ॥

॥ खण्डनम् ॥ नैवं तु स्याद्विचारमन्तरापि ज्ञातुर्गुरोर्यथावदर्थग्रहणस्य सम्भवात् ॥ १४ ॥

न च धर्ममात्रं वेदार्थो ब्रह्म तद्विभूतीनां च तदर्थत्वात् ॥ १५ ॥

धर्ममात्रं वेदार्थ इति पूर्वतन्त्रसिद्धान्त इति चेन्नायं जैमिनीयो नय उत्तरतन्त्रे तत्र तत्र प्रदर्शितस्य तन्मतस्यानेकविधत्वात् ॥ १६ ॥

न च न्याय्यः क्रियाविधिवद्वस्तुविधीनामपि पर्यवसन्नवाक्यार्थत्वात् ॥ १७ ॥

स्वाध्यायाध्ययनविधेर्मन्त्रमात्रविश्रान्तत्वान्मन्त्राणां च प्रायो ब्रह्म तद्विभूत्यन्यतरपरत्वाच्च न तेन विचारपूर्वकधर्मग्रहणाक्षेपक इत्यपि वक्तुं शक्यम् ॥ १८ ॥

अर्थज्ञानं च स्वाध्यायस्य प्रयोजनं नाध्ययनरूपसंस्कारस्य ॥ १९ ॥

अध्ययनप्रयोजनं तु संस्कृतद्रव्याणामिव संस्कृतमन्त्राणां कर्मसु विनियोगार्हत्वम् ॥ २०॥

योग्यत्वं च जप पारायणयोः ॥ २१॥

॥ स्वमतम् ॥ मन्यन्ते हि गुरुमुखाद्गृहीतानामेव मन्त्राणां जपादियोग्यत्वं शिष्टाः ॥ २२॥

अर्थज्ञानस्य दृष्टफलात्मकत्वान्नासंस्कृतस्वाध्यायस्य तद्भवतीति वक्तुमशक्यम् ॥ २३॥

शंसनादौ शब्दार्थोभयप्राधान्यं स्वविधिभिरेव सिध्येद्गुणाधिस्मरणं विना शंसनाद्यसिद्धेः ॥ २४॥

एतेनाध्ययनविधिः स्वाध्यायाध्ययनधर्मविचारयोः पौर्वापर्यम् अनुगृह्णातीति वादो निस्सार इत्युक्तं भवति॥ २५॥

नन्वेवमपि विधिग्राह्यविषयस्य स्वाध्यायस्य च फलवत्वाय कुतो न स्वाध्यायाध्ययनधर्मविचारयोः पौर्वापर्यं कल्पनीयमिति चेत्तस्मिन्कल्पितेऽपि न त्वदभिमतसिद्धिः ॥ २६॥

ततो हि लेशत एव धर्मज्ञानावकाशः प्रायो ब्रह्म तद्विभूत्यन्तर-परत्वात्स्वाध्यायस्य ॥ २७॥

ब्राह्मणानां सङ्ग्राह्यत्वपक्षे वा तादृश्येव दुरवस्था ॥ २८॥

यतः सर्ववेदशाखामन्त्रब्राह्मणापेक्षी धर्मविचारः स्वाध्यायाध्ययन-

विधिस्तु स्वशाखाध्ययनमात्रेण तुष्येत् ॥ २९॥

अपि च यावदक्षरग्रहणानन्तरमेव तदर्थग्रहणमिति वैधस्य युक्तिसिद्धस्य वा नियमाभावान्न स्वाध्यायाध्ययनधर्मविचारयोः पौर्वापर्यसिद्धिः ॥ ३०॥

तत्तद्वाक्याक्षरग्रहणानन्तरमपि तत्तद्वाक्यार्थग्रहणे दोषाभावात् ॥ ३१॥

उक्तं विचारादर्थग्रहणमन्यदिति प्रागेव ॥ ३२॥

वस्तुतस्तु स्वाध्यायाध्ययनविधिर्ब्रह्मयज्ञपरः नाक्षरग्रहणपरः॥ ३३॥

तथा ह्युपक्रमोपसंहारौ ॥ ३४॥

अथ यत्र सम्भवस्तत्र सामान्यतो वेदाध्ययनादनन्तरं धर्मविचारं कार्यमाचार्य उपदिशतीति चेन्न प्रकरण विरोधात् ॥ ३५॥

कस्मादनन्तरं धर्मजिज्ञासा कर्तव्येति प्रश्न एव हि भवत्यानन्तर्यम् अर्थश्चेत् ॥ ३६॥

न वेदाध्ययनादनन्तरं किं कर्तव्यमिति ॥ ३७॥

पूर्ववृत्तस्यैवाध्याहार्यत्वात् ॥ ३८॥

उद्दिष्टश्च प्रकृतत्वेन धर्मविचारो न वेदाध्ययनानन्तरकर्तव्यविशेषः ॥ ३९॥

तस्माद्यदि धर्मविचारान्नियमेन पूर्वभाव्यमस्ति तस्यैवाक्षोपो नानियतस्य ॥ ४०॥

स्वार्थान्यथानुपपत्या यत् किञ्चित्पूर्ववृत्तमुचितमाक्षिपेदिति चेदथशब्दस्याधिकारार्थेऽपि वृत्तेस्तत्सङ्गतेश्च न स्वार्थान्यथानुपपत्तिः ॥ ४१॥

एकदेशार्थं च सूत्रमापद्येतानधीतवेदस्यावारितत्वेन तस्यापि धर्मविचाराधिकारितया स्थितत्वात् ॥ ४२॥

तस्मान्नास्ति सौत्रस्याथशब्दस्यानन्तर्यार्थकत्वात् ॥ ४३॥

अधिक्रियतेऽत्र धर्मविचार इति व्याख्यातव्यमृजुना पथा ॥ ४४॥

इदमाबुद्धिस्थग्रन्थनिर्देशः ॥ ४५॥

तसिलः सप्तम्यर्थत्वं सार्वविभक्तिकत्वात् ॥ ४६॥

ज्ञातुमिच्छया फलपर्यन्तया विचारो यक्ष्यते यथा परेषां नये ॥ ४७॥

॥ इति प्रथममधिकरणम् ॥

## २. अथ धर्मलक्षणाधिकरणम्

*चोदनालक्षणोऽर्थो धर्मः ॥ सूत्रम् २॥*

॥ प्रथमसिद्धान्तः॥ वेदप्रमाणकः प्रयोजनवान्धर्म इत्येकं व्याख्यानम् ॥ २॥

अत्रार्थस्यार्थवति लक्षणा ॥ ३॥

इष्टसाधनत्वमर्थवत्वम् ॥ ४॥

अनर्थमिश्रेऽर्थवति बलतोऽन्यतर निर्णयः ॥ ५॥

॥ द्वितीयसिद्धान्तः॥ प्रवर्तकवैदिकवाक्यनिरूपितः पदार्थो धर्म इत्यपरं व्याख्यानम् ॥ ६॥

प्रवर्तकत्वं साक्षादन्यथा वा ॥ ७॥

अनयोः पक्षयोः शुभा पूर्वहेतुषु द्रव्यगुणकर्मसु धर्मपदार्थविश्रान्तिः ॥ ८॥

॥ मुख्यसिद्धन्तः॥ प्रवर्तकवैदिकवाक्यनिरूपितोऽर्थो धर्म इति परं व्याख्यानम् ॥ ९॥

अत्रापि प्रवर्तकत्वं साक्षादन्यथा वा ॥ १०॥

अर्थश्चेह प्रयोजनपर्यायः ॥ ११॥

साधनस्य प्रयोजनत्वानुपपत्तिरिति चेद्धर्मस्यात्मसंस्काररूपत्वमेव न तदुपकारकद्रव्यादिरूपत्वमिति तस्य प्रयोजनत्वं चाविरुद्धम् ॥ १२॥

अत एव धर्मं पुमर्थेषु गणयन्ति ॥ १३॥

केवलसाधनस्य कथं पुमर्थत्वम् ॥ १४॥

तावता कर्मशक्त्युपरतेर्न स्वर्गादिफलमिति चेन्न धर्मस्य तत्प्रयोजकत्वात् ॥ १५॥

शुद्धस्यालेपस्यात्मनः कथं संस्कारोपपत्तिरिति चेन्मनःप्राणान्यतरसंस्कारस्य तस्मिन्नुपचारः ॥ १६॥

प्राणः श्रेष्ठ इह ग्राह्यः ॥ १७॥

वृत्तेन मनसः संस्कारः ॥ १८॥

कर्मभिः प्राणस्य ॥ १९॥

साक्षाद्विभूतिद्वारा वेश्वरोपासनेनोभयोः ॥ २०॥

कर्मवृत्तयोरविशेष इति चेन्नाथ ते कर्मविचिकित्सा वृत्तविचिकित्सा वा स्यादिति भेदकश्रुतिलिङ्गात् ॥ २१॥

विद्याकर्मणोरविशेष इति चेन्न तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेति भेदकश्रुतिलिङ्गात् ॥ २२॥

उपासनपर्याय एवात्र विद्याशब्दो न प्रज्ञामात्रपर्यायः कर्मणा सह पाठात्पूर्वप्रज्ञायाः पृथगभिधानाच्च ॥ २३॥

कर्मवृत्तोपासनानामन्यतमस्मिन्नपि धर्मत्वप्रत्ययस्तदारब्धत्वात् संस्कारस्य ॥ २४॥

पुमर्थं प्रथमं धर्मपदेनैव व्यवहरन्ति प्राधान्यतो नादृष्टसंस्कारादि-पदैर्जातुचिदिति तत्रैव धर्मपदस्य लाक्षणिकत्वम् इति वक्तुम् अशक्यम् ॥ २५॥

प्रयोजनं प्रयोजनवानपि धर्मो धनवत् ॥ २६॥

सौत्रेण विशेषणेन धनादि स्वर्गादि वारणम् ॥ २७॥

विशेष्येण कर्मादेर्धर्मस्वरूपत्वस्य वारणम् ॥ २८॥

व्यवहारेषु धर्मस्यारम्भककर्मादित्रिकसामान्यनामत्वं तद्विशेषनामत्वं चेष्टं यथा प्रयोगम् ॥ २९॥

तत्र लक्षणारूढिर्भवति ॥ ३०॥

सुचरितलक्षणस्य वृत्तस्य लोकतः सिद्धत्वेपि वेदे पुनर्वृत्तविधेयस्ततो धर्मनिष्पत्यवबोधनार्थाः ॥ ३१॥

अन्यथा नास्तिकानां मत इव वृत्तस्य लोकसन्तोषमात्रविश्रान्तत्वेन दृष्टफलकत्वमेव प्रसज्येत ॥ ३२॥

अहिंसादेर्वृत्तत्वमपापमात्रत्वं च यथा प्रयोगम् ॥ ३३॥

भूतदयादिपरत्वे वृत्तत्वम् ॥ ३४॥

16 अपापमात्रत्वमन्यदा ॥ ३५॥

धर्मलक्षणेनाधर्मलक्षणं व्याख्यातम् ॥ ३६॥

निवर्तवाक्यनिरूपितोऽनर्थोऽधर्म इति ॥ ३७॥

भिद्येत वाक्यमिति चेन्न सूत्रेषु वाक्यभेददोषः ॥ ३८॥

अधर्मस्यान्तरमालिन्यरूपत्वादनर्थत्वम् ॥ ३९॥

पूर्वयोः पक्षयोरपूर्वस्येवात्र संस्कारस्योभयविधस्य चोदना बोध्यत्वम् ॥ ४०॥

इति द्वितीयमधिकरणम्

## ३. अथ निमित्तपरीक्षाधिकरणम्

*॥ तस्य निमित्तरपरीष्टिः ॥ सूत्रम् ३॥*

धर्मस्य निमित्तपरीक्षाधिक्रियत इति ॥ १॥

इति तृतीयमधिकरणम्

## ४. अथ प्रत्यक्षाद्यनिमित्तत्वाधिकरणम्

*॥ सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥ सूत्रम् ४॥*

द्रव्यगुणकर्मणां सन्निकर्षे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षप्रमाणं धर्मविबोधं प्रत्यनिमित्तं स्याद्विद्यमानो- पलम्भनत्वादिति ॥१॥

सन्निकृष्टद्रव्यगुणकर्मणामेव प्रत्ययो विद्यमानशब्दात् ॥२॥

प्रत्यक्षनिराकरणात्तन्मूलकानां प्रमाणान्तराणामपि निराकरणं भवति ॥३॥

प्रत्यक्षदृष्टानुवादस्याप्तवाक्यस्यापि निराकरणं प्रसज्येतेति चेत्तदिष्टम् ॥४॥

अतीन्द्रियत्वाद्धर्मो विलक्षणः ॥५॥

इति चतुर्थमधिकरणम्

## ५. अथ वेदप्रामाण्याधिकरणम्

*॥ औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ सूत्रम् ५॥*

शब्दस्यार्थेन सम्बन्धः सहजस्तु भवति तस्य सहजार्थसम्बन्धस्य शब्दस्योपदेशो वेदापरपर्यायो ज्ञानं भवति तच्च ज्ञानमविपर्यस्तमिन्द्रियागोचरेऽर्थे धर्मदेवता स्वर्गादौ तत्प्रत्यक्षाद्यनपेक्षदिव्यज्ञानत्वात्प्रमाणं भवति पूज्यस्य बादरायणस्याचार्यस्य मतेनेति ॥१॥

देवभाषाशब्दजातस्यैवात्र ग्रहणं प्रकरणादन्वयाच्च ॥ २॥

तद्भाषाव्याकरणस्यैव हि स्मृतित्वम् ॥ ३॥

भाषान्तरेषु नानादित्वप्रत्ययः ॥ ४॥

अतीन्द्रियस्य दिव्येन चक्षुषा दृष्टस्य प्रकटनमुपदेशः ॥ ५॥

इन्द्रियग्राह्येष्वपि दिव्यचक्षुषो गतेरप्रतिषेधस्तदनुवादानामुपदेशे ॥ ६॥

समष्टिकरणं दिव्यं चक्षुरुच्यते ॥ ७॥

समष्टेः करणं व्यष्टेः स्यात्स्वं तपोबलाद्यथा परयत्नाद्योगनिद्रायां लोके ॥ ८॥

मध्यमावैखर्योर्यस्य शब्दात्मकत्वं तस्यैव परापश्यन्त्योर्ज्ञानात्मकत्वमिति ज्ञानोपदेशयोस्तादात्म्येन सामानाधिकरण्योक्तिः ॥ ९॥

तानतीन्द्रियदर्शिन उपदेष्टॄनृषीनाहुः ॥ १०॥

अविपर्यस्तज्ञानमयत्वात्तदुपदेशस्य वेदाख्या ॥ ११॥

अपरतन्त्रशब्दत्वाच्छब्दाख्या ॥ १२॥

इति पञ्चममधिकरणम्

## ६. अथ शब्दनित्यत्वाधिकरणम्

सामान्यतो वर्णात्मकस्य ॥ १ ॥

वर्णानां नित्यत्वेऽपि तत्क्रमार्थसम्बन्धस्य कृत्रिमत्वसम्भवात्सुरभाषाशब्दानां तन्निवारणाय पूर्वस्मिन्नधिकरणे शब्दार्थसम्बन्धस्यौत्पत्तिकत्वमुक्तम् ॥ २ ॥

वर्णानामनित्यत्वे सर्वशब्दार्थसम्बन्धस्य कृत्रिमत्वप्रसक्तेरिदम् अधिकरणं तन्नित्यत्वसाधनाय ॥ ३ ॥

तत्रादौ षड्भिः सूत्रैः पूर्वः पक्षः ॥ ४ ॥

*॥ कर्मैके तत्र दर्शनात् ॥ सूत्रम् ६ ॥*

वर्णात्मकशब्दं कार्यमेके प्राहुरुच्चारणरूपकार्यं तस्य दर्शनात् इति ॥ ५ ॥

*॥ अस्थानात् ॥ सूत्रम् ७ ॥*

अस्थितिपर्यायाद्विनाशात्कार्यस्वभावाच्चेति ॥ ६ ॥

*॥ करोति शब्दात् ॥ सूत्रम् ८ ॥*

व्यवहारे शब्दकर्मकात्करोति शब्दाच्चेति ॥ ७ ॥

*॥ सत्त्वान्तरे च यौगपद्यात् ॥ सूत्रम् ९ ॥*

एकेनोच्चारितस्य शब्दस्यान्यस्मिन्नपि जने तत्काल एवोच्चारणतो दर्शनाच्चेति ॥८॥

नित्यश्चेदेकः कथमनेकत्र युगपत् ॥९॥

*॥ प्रकृतिविकृत्योश्च ॥ सूत्रम् १०॥*

प्रत्ययोत्तरधातुप्रातिपदिकान्यतरप्रकृतौ पदात्मकविकृतौ च दर्शनाच्चेति ॥१०॥

पदपाठात्मकप्रकृतौ संहितापाठात्मकविकृतौ च दर्शनाच्चेति वा ॥११॥

संस्कृतात्मकप्रकृतौ प्राकृताद्यात्मकविकृतौ दर्शनाच्चेति वा ॥१२॥

कार्यस्यैव हि विकारसम्भवः ॥१३॥

*॥ वृद्धिश्चकर्तृभूम्नास्य ॥ सूत्रम् ११॥*

कर्तृबाहुल्यादस्य शब्दस्य वृद्धिश्चेति ॥१४॥

नित्यस्य वृद्धिर्हि नोपपद्यते ॥१५॥

अथ षड्भिः सूत्रैः परिहरति ॥१६॥

*॥ समन्तु तत्र दर्शनम् ॥ सूत्रम् १२॥*

पुरुषप्रयत्नमूलके कर्मणि दर्शनमभिव्यक्तिजननयोः समन्तु स्यादिति ॥ १७ ॥

तस्मादेतेन न शब्दजननं साध्येत हेतोरनैकान्तिकत्वात् ॥ १८ ॥

व्यजनचालनादिकर्मणि पवनादिप्रादुर्भावोऽभिव्यक्तेरुदाहरणम् ॥ १९ ॥

*॥ सतः परमदर्शनं विषयानागमात् ॥ सूत्रम् १३ ॥*

इन्द्रियसन्निकर्षानागमात्सत एवाननुभवः सोऽयं योऽनन्तरः पूर्वपक्षहेतुरस्थानापरपर्यायो विनाश इति ॥ २० ॥

*॥ प्रयोगस्य परम् ॥ सूत्रम् १४ ॥*

करोतेः शब्दकर्मकत्वं प्रयोगस्य सम्बन्धान्नकृतेः सम्बन्धादिति ॥ २१ ॥

*॥ आदित्यवद्यौगपद्यम् ॥ सूत्रम् १५ ॥*

आदित्यवच्छब्दस्य युगपदनेककर्तृकं दर्शनमिति ॥ २२ ॥

विलोकनप्रयोगयोर्विलक्षणत्वाद्विषमो दृष्टान्त इति चेत् ॥ २३ ॥

न तयोः साम्यमुद्दिष्टमस्माभिः ॥ २४ ॥

अपि तु विलोकनश्रवणयोः ॥ २५ ॥

प्रयोक्ता च श्रृण्वन्नेव शब्दं प्रतिपद्यते न वागिन्द्रियव्यापारमात्रात् ॥ २६ ॥

अभिमुखीभाव आदित्यस्य दर्शनायेव वागिन्द्रियव्यापारः शब्दस्य श्रवणाय निमित्तं स्यात् ॥ २७ ॥

एकस्य दर्शनाय बहूनामभिमुखीभाव इवैकस्य श्रवणाय बहूनां वागिन्द्रियव्यापारो नानुपपन्नः ॥ २८ ॥

अभिमुखीभाव वागिन्द्रियव्यापारयोर्यत्नमूलकत्वसाधारण्येन साम्यम् ॥ २९ ॥

प्रादुर्भाव तिरोधानसाधारण्येनादित्यशब्दयोः ॥ ३० ॥

अन्योऽपि श्रृणोतीत्यत्र स्वभावविशेषः ॥ ३१ ॥

*॥ वर्णान्तरमविकारः ॥ सूत्रम् १६ ॥*

न पदसंहिताप्रकृतादयो विकृतयोऽपि तु वर्णान्तरभूता इति ॥ ३२ ॥

*॥ नादवृद्धिः परा ॥ सूत्रम् १७ ॥*

कर्तृबाहुल्याद्या वृद्धिः सा नादवृद्धिरिति ॥ ३३ ॥

तेजोरूपे इव शब्दनादौ भिन्नौ स्याताम् ॥ ३४ ॥

शब्दस्य द्रव्यत्वापत्तिरिति चेत्तदिष्टम् ॥ ३५ ॥

गतिक्रियावत्वाच्च तस्य द्रव्यत्वसिद्धिः ॥ ३६॥

शब्दनादयोर्व्यवहारसङ्करस्तेजोरूपयोरिव भाक्तः ॥ ३७॥

अन्तरिक्षविद्युत इवाभिव्यक्तिसमकालिकं तिरोधानमस्य ॥ ३८॥

क्वचिदचिरस्थितिरपि निमित्तसातत्यात् ॥ ३९॥

अथ षड्भिः सूत्रैः सिद्धान्तः ॥ ४०॥

*॥ नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥ सूत्रम् १८॥*

दर्शनस्यार्थप्रत्यायनार्थत्वाच्छब्दो नित्यस्तु स्यादिति ॥ ४१॥

दर्शनमात्रोच्चारणेनेन्द्रियगोचरीभावः ॥ ४२॥

प्रयोक्ता हि तस्य नार्थसम्बन्धं करोति ॥ ४३॥

तत्पूर्वसम्बन्धश्च तत्कालजस्य न स्यात् ॥ ४४॥

॥ आक्षेपः ॥ ननु मास्तु पुर्वापरेषां गोशब्दानां व्यक्तित ऐक्यं ते सजातित्वादेकार्थबोधकास्तस्मादयमहेतुः ॥ ४५॥

शब्दजातिभिरर्थस्य सम्बन्धो न शब्दव्यक्तिभिः ॥ ४६॥

व्यक्त्या जातिः समर्पिता स्यादर्थप्रत्यायनाय ॥ ४७॥

कर्मात्मसु चेष्टासु चैवमर्थप्रत्यायकत्वं दृश्यत इति चेत् ॥ ४८॥

॥ समाधानम् ॥ अभिव्यक्तितो गोचराणां शब्दानामस्तु तरङ्ग-वन्नानात्वसजातित्वव्यवहारो यस्यैते स एकः समुद्रवन्नित्यश्च॥ ४९॥

एक एवानेकनादो निमित्तभेदादनेकवच्चोपाधिभेदादुक्तं भवति ॥ ५०॥

उपाधिसजातित्वमेव शब्दसजातित्वव्यवहारहेतुर्न शब्दो नाना तस्य वस्तुत एकत्वात् ॥ ५१॥

॥ आक्षेपः ॥ ननु सिद्धं भवत्यजैमिनीयं तु स्यात् ॥ ५२॥

स हि बह्वीः शब्दव्यक्तीर्मन्यते नित्याः ॥ ५३॥

तासामेव परार्थत्वादिति चेत् ॥ ५४॥

नित्यशब्दस्यैव तत्तद्रूपतया प्रादुर्भाव इति न जैमिनिविरोधः ॥ ५५॥

॥ आक्षेपः ॥ ननु प्रतिज्ञाविरोध एवं तव स्यात् ॥ ५६॥

त्वया हि प्रतिज्ञातं वर्णात्मकः शब्दो नित्य इति ॥ ५७॥

वर्णश्च नाखण्डः शब्द इति चेत् ॥ ५८॥

॥ समाधनम् ॥ न वर्णव्यष्टयोऽस्माभिरुद्दिष्टाः ॥ ५९॥

समष्टिवर्णपरैवास्माकं प्रतिज्ञा ॥ ६० ॥

यस्याक्षराख्या प्रणवाख्या च वेदेषु प्रसिद्धे ॥ ६१ ॥

तस्य विभूतयोऽन्ये वर्णाः प्रादुर्भावे निमित्तोपाधिसापेक्षाः ॥ ६२ ॥

॥ आक्षेपः ॥ स प्रणवश्चेत्पुनः परिच्छिन्नत्वमायातमिति चेत् ॥ ६३ ॥

मैवमोङ्कारस्य प्रणवानुकरणमात्रत्वात् ॥ ६४ ॥

अखण्ड एव वस्तुतः प्रणवः ॥ ६५ ॥

अनुकरणेनानुकार्यस्याभिधानं भाक्तं शास्त्रेषु ॥ ६६ ॥

*॥ सर्वत्र यौगपद्यात् ॥ सूत्रम् १९ ॥*

कालत्रयवर्तिन्यर्थे युगपत्प्रवृत्तेश्चेति ॥ ६७ ॥

इदं पदानामाकृतिवाचकत्वात् सिध्येत् ॥ ६८ ॥

तदभिप्रेतं जैमिनेर्यथोत्तरत्र वक्ष्यति ॥ ६९ ॥

*॥ सङ्ख्याऽभावात् ॥ सूत्रम् २० ॥*

त्रिर्गोशब्द उच्चारिते त्रयो गोशब्दा इति सङ्ख्याप्रत्ययस्य शब्दविषयत्वेनाभावाच्चेति ॥ ७० ।

योऽस्ति स उच्चारणविषयः ॥ ७१॥

अस्ति व्यवहारः क्वचिदिति चेत्तत्रोक्तम् ॥ ७२॥

*॥ अनपेक्षत्वात् ॥ सूत्रम् २१॥*

उच्चारणानपेक्षत्वादर्थप्रत्याय न इति ॥ ७३॥

स्मृतस्याप्यर्थबोधकत्वात् ॥ ७४॥

लिपौ भावितस्य च ॥ ७५॥

*॥ प्रख्याभावाच्च योगस्य ॥ सूत्रम् २२॥*

अर्थसम्बन्धस्य प्रसिद्धिसद्भावाच्चेति ॥ ७६॥

अर्थमालोक्य यच्छब्दं स्मरति सा सम्बन्धप्रसिद्धिः ॥ ७७॥

*॥ लिङ्गदर्शनाच्च ॥ सूत्रम् २३॥*

वाचा विरूपनित्ययेति मान्त्रवर्णिकस्य लिङ्गस्थदर्शनाच्चेति ॥ ७८॥

भूतार्थानुवादो लिङ्गमित्येकं व्याख्यानम् ॥ ७९॥

अन्यपरे वाक्येऽन्यपर एकदेश इत्यन्यत् ॥ ८०॥

अभिधानसामर्थ्यमित्यपरम् ॥ ८१॥

त्रिविधं च लिङ्गं भवति ॥ ८२॥

॥ सिद्धान्तः ॥ सर्वस्य शब्दस्य नित्यत्वं साध्यन्त इति चेल्लौकिकवैदिकयोरविशेषः ॥ ८३॥

वैदिकस्यैवेति चेल्लौकिकस्य कार्यत्वात्तद्भिन्नत्वमापद्येत ॥ ८४॥

ततो वैदिकलौकिकयोरग्निशब्दयोरेकत्वप्रत्ययो न स्यात् ॥ ८५॥

तदभावे नैकार्थप्रत्यायनाभावः ॥ ८६॥

परार्थत्वानां हेतूनामुभयत्र तुल्यत्वादन्यतरस्य नित्यत्वम् अन्यस्यानित्यत्वं चेत्यनुपपन्नम् ॥ ८७॥

॥ उत्तरम् ॥ तस्मादविशिष्टं प्रदर्शनम् ॥ ८८॥

॥ पूर्वपक्षः ॥ ननु सर्वशब्दनित्यत्वसाधनमेकदेशिमतम् ॥ ८९॥

अन्त्येन सिद्धान्तो वैदिकः शब्द एव नित्यो लिङ्गदर्शनादिति ॥ ९०॥

लौकिकस्य परिशेषात्तदनुवादत्वमतत्कालिकसादिशब्दत्वं वा यथा सम्भवमिति चेत् ॥ ९१॥

॥ खण्डनम्॥ मैवं समुच्चयेन सूत्रस्य पूर्वगामित्वात् ॥ ९२॥

अध्याहारक्लेशात् ॥ ९३॥

उभयोः स्वभाववैलक्षण्याभावात् ॥ ९४॥

उभयत्र वर्णात्मकत्वस्य तुल्यत्वात् ॥ ९५॥

वर्णक्रमस्योभयत्र च तुल्यं प्रयोक्तृसापेक्षत्वात् ॥ ९६॥

उभयात्राभिव्यक्तेस्तुल्यत्वात् ॥ ९७॥

तिरोधानस्य च ॥ ९८॥

वैलक्षण्येन कथने प्रयोजनाभावाच्च ॥ ९९॥

॥ पूर्वपक्षम् उत्तरम्॥ अस्ति नित्यत्वेन प्रामाण्यसिद्धिः प्रयोजन- मिति चेत् ॥ १००॥

॥ खण्डनम्॥ नित्यत्वप्रमाणत्वयोरितरेतराश्रयः स्यात् ॥ १०१॥

नित्यत्वायत्तं हि लिङ्गप्रामाण्यं लिङ्गप्रामाण्यायत्तं हि नित्यत्वम् ॥ १०२॥

॥ पूर्वपक्षम् उत्तरम्॥ प्रामाण्यप्रतिबन्धकाभावायैव नित्यत्वम् अर्थप्रत्यायनादेव प्रामाण्यमिति चेत् ॥ १०३॥

॥ खण्डनम्॥ एवमपि नित्यत्वप्रतिबन्धकाभावप्रमाणत्वानाम् इतरेतराश्रयत्वभ्रमणाच्चक्रकम् ॥ १०४॥

लौकिकस्यापि प्रामाण्यं प्रसज्येतातत्कालिकत्वमात्रेणापि प्रति-बन्धकस्य निवारणात् ॥ १०५ ॥

॥ सिद्धान्तः ॥ तस्मान्नास्ति विशेषो वैदिकलौकिकयोः ॥ १०६ ॥

॥ पूर्वपक्षः ॥ ननु वैदिकलौकिकानि पदान्यविशिष्टानि भवन्तु ॥ १०७ ॥

वाक्यानि तु पूर्वाणि नित्यानि स्युरुत्तराणि तु पौरुषेयाणि ॥ १०८ ॥

वैदिकवाक्यानां नित्यत्वं च कर्त्रनुपलब्धेः ॥ १०९ ॥

रूपयतीति रूपः कर्ता तद्विरूपापदं विकर्तृकापरम् ॥ ११० ॥

विरूपनित्येयेति विशेषणोभयपदसमासः ॥ १११ ॥

सूत्रं च न सामान्यतः शब्दनित्यत्वसाधनायैव ॥ ११२ ॥

अपि तु वैदिकपदानुपूर्व्या अकृतकत्वसाधनाय च ॥ ११३ ॥

लिङ्गे विशेषणेनोत्तरेण पूर्वं साध्यते ॥ ११४ ॥

पूर्वेणोत्तरम् ॥ ११५ ॥

सूत्रेषु वाक्यभेदे दोषाभावादुभयोरर्थयोश्च प्रतीतिः ॥ ११६ ॥

शब्दस्य नित्यत्वेऽपि वैदिवेकषु शब्देषु लौकिविदानुपूर्व्याः

कृतकत्वात्पुरुषबुद्धिदोषसम्भवादप्रामाण्यशङ्कायामुत्तरेणार्थेन परिहारः सङ्गत इति चेत् ॥ ११७॥

॥ खण्डनम्॥ एवमप्यानुपूर्वी नित्यत्वप्रमाणत्वयोरितरेतराश्रयः ॥ ११८॥

लिङ्गप्रामाण्यायत्तं ह्यानुपूर्वी नित्यत्वमानुपूर्वी नित्यत्वायत्तं हि लिङ्गप्रामाण्यम् ॥ ११९॥

अपि चर्षेरात्मनः सम्बुद्धिर्विरूपेति न वाचो विशेषणं विशेषणान्तरसमस्तं तत् ॥ १२०॥

तथा पृथक् पदपाठात् ॥ १२१॥

आङ्गिरसो विरूपस्तस्य मन्त्रस्यर्षिः प्रसिद्धः ॥ १२२॥

वसिष्ठनोधो वैयश्वादिवन्मन्त्रद्रष्टुरात्मसम्बोधनोपपत्तिर्मन्त्रे ॥ १२३॥

॥ अन्यपूर्वपक्षः॥ लिङ्गदर्शनादित्यत्र कर्त्रनुपलब्धिरूपानुमापक-हेतोरित्युत्तरार्थे सङ्गतिरिति चेत् ॥ १२४॥

॥ खण्डनम्॥ ऋषिदर्शनान्न हेतुप्रतिष्ठा ॥ १२५॥

मन्त्रकृद्भ्य इति ब्राह्मणलिङ्गात् ॥ १२६॥

पाणिनेर्मन्त्रकृत्पदव्युत्पादनात् ॥ १२७॥

मन्त्रकाररूपसिद्धये मन्त्रकररूपप्रतिषेधात् ॥१२८॥

मन्त्रस्थस्यास्मच्छब्दार्थस्य ऋषिभिरेवान्वितत्वात् ॥१२९॥

स्पष्टादात्मकृतिख्यानाच्च बहूनामृषीणां मन्त्रेषु ॥१३०॥

यावदेकर्षिभाषागतिसादृश्यात् ॥१३१॥

तद्भेदे तद्भेदात् ॥१३२॥

वक्तृभेदपरिहार्येभ्यः पुनरुक्तिदोषेभ्यः ॥१३३॥

पाठप्रवचनादृषिनामसम्बन्ध इति परिहारमात्रं कारणान्तरेण चेत् सिध्यति नित्यत्वम् ॥१३४॥

नित्यत्वाख्या गौणत्वकर्त्रनुपलब्धीनामितरेतराश्रयणाच्चक्रकम् ॥१३५॥

परिहारो वा कर्तुमशक्यो मान्त्रवर्णिकास्मदर्थादि प्रतिकूल्यात् ॥१३६॥

॥सिद्धान्तः॥ तस्माद्वैदिकवाक्यबन्धा आर्षा इत्यभ्युपगन्तव्यम् ॥१३७॥

उक्तः समष्टिकारणानुग्रहस्तेषाम् ॥१३८॥

वेदाविर्भावे समष्टेः शक्तिर्व्यष्टेर्व्युत्पत्तिश्च कारणे इत्युक्तं भवति ॥१३९॥

17 वेदाः काव्यानि वेधस उच्यन्ते करणस्य तदीयत्वात् ॥१४०॥

ऋषीणां व्युत्पत्तेस्तदीयत्वात् ॥१४१॥

उभयं च व्यष्टेर्लौकिकेषु वाक्येष्विति विशेषः ॥१४२॥

एतेन पदानुपूर्वीरचनं लोके वेदे च पुरुषयत्नसापेक्षमित्युक्तं भवति ॥१४३॥

यत्नभेदस्तु महानस्ति ॥१४४॥

तस्मात्सूत्रं सामान्यतः शब्दनित्यत्वस्यैव हेतुं समुच्चिनोतीति वक्तव्यम् ॥१४५॥

पूर्वे तत्पूर्वत्वस्यैव हेतवोऽयं साक्षान्नित्यत्वस्येति विशेषः ॥१४६॥

व्यतिरेकेण पूर्वे हेतवो वाकार्यत्वप्रतिद्वन्द्वित्वात् ॥१४७॥

अन्वयतोऽयं हेतुः साक्षात्साधकत्वात् ॥१४८॥

कथं साधयतीति चेदुपदेशप्रामाण्यात् ॥१४९॥

तवापीतरेतराश्रय इति चेन्न प्रामाण्यस्यास्माकं नित्यत्वानायत्तत्वात् ॥१५०॥

अर्थसम्बन्धस्य कृत्रिमत्वे वा बोधकत्वस्याव्याहतत्वान्नेतराक्षेपाः ॥१५१॥

इति षष्ठमधिकरणम्

## ७. अथ वेदवाचकत्वाधिकरणम्

तत्रैकेनादौ पूर्वः पक्षः ॥ १॥

*॥ उत्पत्तौ वा वचनाः स्युरर्थस्यातन्निमित्तत्वात् ॥ सूत्रम् २४॥*

शब्दस्यार्थेन सम्बन्धस्यौत्पत्तिकत्वे वा वैदिकाः शब्दा अवाचकाः स्युरर्थस्य तन्निमित्तत्त्वाभावादिति ॥ २॥

वैदिकशब्दार्थत्वेनाभिमतस्य धर्मादेर्हि वैदिकशब्दनिमित्तत्त्वं न पश्यामः ॥ ३॥

अर्थः खलु शब्दस्य प्रवृत्तौ निमित्तं भवति ॥ ४॥

अदृष्टो धर्मस्वर्गदेवतादि रूपोऽर्थः ॥ ५॥

तत्र कथं धर्मादिपदप्रवृत्तिः ॥ ६॥

दृष्टेषु खलु अर्थेषु शब्दाः प्रवर्तेरन् ॥ ७॥

धर्मस्य क्रिया वैलक्षण्येनादृष्टत्वमुक्तं भवतैव ॥ ८॥

तस्य क्रियात्मकत्वाभ्युपगमे वा तस्य धर्मत्वमप्रत्यक्षम् ॥ ९॥

अथैकेन सूत्रेणैतमाक्षेपं परिहरन् सिद्धान्तमाह ॥ १०॥

*॥ तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ॥ सूत्रम् २५॥*

तस्मिन्नर्थे प्रवृत्तानां शब्दानां कर्मप्रयोजनेन हेतुनोपदेशोऽर्थस्य तन्निमित्तत्वादिति ॥ ११॥

तदा तदा भगवद्भिर्महर्षिभिरिन्द्रियनिरपेक्षेण दिव्यज्ञानेन दृष्टेष्वेवार्थेषु स्वर्गादिशब्दाः प्रवृत्ताः ॥ १२॥

तत्साधनत्वेन दृष्ट एवातीन्द्रियेऽर्थे धर्मशब्दः प्रवृत्तः ॥ १३॥

तस्मादस्त्यर्थस्य तन्निमित्तत्वम् ॥ १४॥

दिव्यज्ञानदृष्टानां चार्थनां लोके कर्मप्रवर्तनायोपदेशः ॥ १५॥

लोकेऽपि पुरो नवस्थितस्वपूर्वप्रत्यक्षानुवादेषु गतचारित्रकीर्तनेषु चैषैव रीतिर्दृश्यते ॥ १६॥

॥ अन्यमतम्॥ व्यक्तिजातिरूपार्थाश्रयणेन पूर्वपक्षसिद्धान्तावित्यन्ये ॥ १७॥

॥ आक्षेपः॥ नन्वाकृतिवादे गणनादीनामर्थानामसङ्ग्रहस्तेषाम् अजातित्वात् ॥॥ १८॥

इन्द्रियादीनां चेति चेत् ॥ १९॥

॥ समाधानम्॥ तत्रापि देशपरिच्छेदेन कालपरिच्छेदेन च विषयीभावानुसारेण व्यक्तित्वं सर्वदेशकालस्थोद्देशेन जातित्वं चेत्यविरोधः ॥ २०॥

॥ खण्डनमतम्॥ यद्यप्युभावपि पक्षौ न्यायतः सम्मतौ तथाप्यत्र प्रथम एव ज्यायान्प्रकरणात् ॥ २१॥

सर्वत्र यौगपद्यादित्यत्रैव गतार्थः परः ॥ २२॥

सम्बन्धश्चास्योत्तरसूत्रार्थेन दविष्ठः ॥ २३॥

लोकवेदयोरुभयोरपि तुल्यत्वादाकृतिवादस्य ॥ २४॥

॥ इतरमतम्॥ पदार्थानामवाक्यार्थत्ववाक्यार्थत्वे आश्रित्य पूर्वपक्ष-सिद्धान्तावितीतरे ॥ २५॥

॥ खण्डनम्॥ वैदिकानां लौकिकिनां च पदानां नित्यत्वे तुल्येऽपि लौकिकाः कृत्रिमाः पदसङ्घातानत्वेवं वैदिका इति स्थापयितुमेष यत्नोऽनृजुना पथा ॥ २६॥

पदार्थेभ्यो वाक्यार्थस्य भिन्नत्वे पदसङ्घातापेक्षा तस्य ॥ २७॥
सङ्घाताङ्गीकारे वेदाश्च पौरुषेयाः स्युः पुरुषयत्नसापेक्षत्वात् सङ्घातस्य ॥ २८॥

पदार्थानां वाक्यार्थत्वाङ्गीकारे वा सङ्घातनिराकरणमशक्यमिति तु ब्रूमः ॥ २९॥

अस्तु पदार्था एव वाक्यार्थस्तथापि संहता एवेति वक्तव्यम् ॥ ३०॥
पदार्थानां सङ्घातश्चाकाङ्क्षादिबलाद्योगः ॥ ३१॥

असंहतानां पृथक् पृथग्वर्तिनां पदार्थानामवाक्यार्थत्वात् ॥ ३२॥

पदार्थसङ्घातस्य च पदसङ्घातो हेतुर्वक्तव्यः ॥ ३३॥

॥ पूर्वपक्षसमाधानम् ॥ पदसङ्घाताभावेऽपि पृथक् पृथग्वर्तिभ्य एव पदेभ्यः पदार्थाः स एव वाक्यार्थ इति चेत् ॥ ३४॥

॥ खण्डनम्॥ वेदे यत्र क्वचिद्विद्यमानानामपि पदानामर्थाः प्रकरणाद्यनपेक्षाः कुतो वाक्यार्थो न स्यात् ॥ ३५॥

अग्निहोत्रं जुहुयात्स्वर्गकाम इति त्रीणि पदानि ॥ ३६॥

योऽग्निमुद्वासयेदिति त्रीणि ॥ ३७॥

तेषु चाग्निहोत्रमुद्वासयेत्स्वर्गकाम इति यदि कश्चिद्वदेत्स कथं प्रत्याख्यातव्यः ॥ ३८॥

तस्यापि वैदिकपदार्था एव वाक्यार्थः ॥ ३९॥

तस्यापि वाक्यार्थेऽस्त्याकाङ्क्षोपशमः ॥ ४०॥

॥ पूर्वपक्षाक्षेपः ॥ पाठकक्रमभङ्ग इति चेत् ॥ ४१॥

॥ खण्डनम्॥ केनायं नित्यानां पदानां क्रमो निबद्धः ॥ ४२॥

त्वन्मते कर्तुरभावात्पाठकानामुपरि स भारो निक्षेप्यः ॥ ४३॥

तत्र कस्यचित्कश्चित्क्रमश्चेदपरस्यापरः कुतो न स्यात् ॥ ४४ ॥

॥ पूर्वपक्षसमाधनम् ॥ आद्यपाठकक्रमोऽनुसर्तव्य इति चेत् ॥ ४५ ॥

॥ खण्डनम् ॥ स स्वबुध्यनुसारेण नित्यानां पदानां कमपि क्रमं निबबन्धेति पौरुषेयत्वं पुनरायातम् ॥ ४६ ॥

लोके च कवयो नित्यानामेव पदानां निबध्नन्ति कमपि क्रमम् ॥ ४७ ॥

एकस्य पदस्य बहुषु स्थलेष्वावृत्तिश्च पदसङ्घातवादानुकूला ॥ ४८ ॥

॥ उत्तरपक्षः ॥ तस्मात्पदार्था एव वाक्यार्थ इति वादो न साधकः पदसङ्घातनिराकरणस्य ॥ ४९ ॥

न वा बाधको वाक्यार्थः पदार्थेभ्यो भिन्न इति वादो वेदप्रामाण्यस्य ॥ ५० ॥

तस्य नित्यत्वानायत्तत्वात् ॥ ५१ ॥

अथैकेन लोके वेदाद्भेदं दर्शयति ॥ ५२ ॥

*॥ लोके सन्नियमात्प्रयोगसन्निकर्षः स्यात् ॥ सूत्रम् २६ ॥*

लोके विद्यमानेषु दृष्टेषु द्रव्यगुणकर्मस्वेव नियमात्प्रयोगस्येन्द्रिय-सन्निकृष्टार्थवर्तित्वं स्यादिति ॥ ५३ ॥

सत्सम्प्रयोग इत्यत्रेवात्रापि सच्छब्दार्थो बोध्यः ॥ ५४ ॥

अतीन्द्रियपदार्थेषु लोके प्रयोगो नास्तीत्युक्तं भवति ॥ ५५॥

वेदे तु नैष नियमो दिव्यचक्षुषां महर्षीणामतीन्द्रियेष्वपि प्रयोगोपपत्तेः ॥ ५६॥

गतचारित्रानुकीर्तनेषु लोकेऽपि नैष नियमोऽस्तीति चेन्न तत्र प्रथमप्रयोगे नियमसद्भावात् ॥ ५७॥

॥ इति सप्तममधिकरणम् ॥

## ८. अथ षड्भिः वेदासन्निकर्षाधिकरणम्

तत्रादौ द्वाभ्यां पूर्वः पक्षः ॥ १॥

*॥ वेदांश्चैके सन्निकर्षं पुरुषाख्याः ॥ सूत्रम् २७॥*

एके वेदांश्च पुरुषाख्या इति कृत्वा लोकवदिन्द्रियसन्निकृष्टार्थ-प्रयोगान्मन्यन्त इति ॥ २॥

पुरुषाख्याप्रसिद्धिश्च माधुच्छन्दसादिव्यवहरणात् ॥ ३॥

कालिदासादय इव मधुच्छन्दःप्रभृतयः कुत इन्द्रियसन्निकृष्टार्थ-प्रयोक्तारो न स्युः ॥ ४॥

*॥ अनित्यदर्शनाच्च ॥ सूत्रम् २८॥*

अनित्यानां लौकिकानां दर्शनाच्च वेदानेके सन्निकर्षं मन्यन्त इति ॥५॥

वेदे हि बहुलाः कथा अनित्यानधिकृत्य श्रूयन्ते ॥६॥

ताश्च लोककथानिर्विशेषाः ॥७॥

ऋषेरिन्द्रियप्रत्यक्षास्तदुपजीव्यपरप्रत्यक्षावाताः स्युरिति वक्तुं युक्तम् ॥८॥

अथ चतुर्भिः परिहरति ॥९॥

*॥ उक्तं तु शब्दपूर्वत्वम् ॥ सूत्रम् २९ ॥*

सर्वस्यापि ज्ञानस्य दिव्यस्य लौकिकस्य च शब्दपूर्वत्वं शब्दपुरःसरत्वमुक्तं प्राक्तस्माच्छब्दसाम्यमात्रेण ज्ञानसाम्यं न वक्तव्यमिति ॥१०॥

*॥ आख्याप्रवचनात् ॥ सूत्रम् ३० ॥*

प्रवचनाद्दृष्ष्याख्येति ॥११॥

प्रवचनं च दिव्यदर्शनप्रकटनम् ॥१२॥

यद्यपि दिव्येषु ज्ञानेषु दर्शनं समष्टेस्तत्करणमूलकत्वात्तथापि तस्य प्रवचनं व्यष्टेरिति तत्प्रोक्तत्वात्तदाख्येत्युक्तं भवति ॥१३॥

*॥ परं तु श्रुतिसामान्यमात्रम् ॥ सूत्रम् ३१ ॥*

परमनित्ययोगित्वं श्रुतिसाधारण्यमात्रं दिव्यज्ञानानुवादानां सह लौकिकज्ञानानुवादैः ॥१४॥

अनित्यानां दिव्यचक्षुरविषयत्वमिति न नियमः ॥१५॥

चर्मचक्षुषेव दिव्यचक्षुषा पश्यन्नपि देवदत्तं देवदत्त इत्येव ब्रुयात् ॥१६॥

उभयत्र श्रुतिसाधारण्यं श्रोतुः ॥१७॥

॥ पूर्वपक्षचोदनम्॥ अथ किं प्रयोजनमनित्यानामुपदेशस्येति चेत् ॥१८॥

*॥ कृते वा विनियोगः स्यात्कर्मणः सम्बन्धात् ॥ सूत्रम् ३२॥*

॥ समाधानम्॥ कृतेऽनित्येऽर्थे वा विनियोगः प्रयोजनं स्यात्कर्मणः सम्बधात्तस्यार्थस्येति ॥१९॥

अनित्यार्थोपदेशः कर्मसम्बन्धादित्युक्तं भवति ॥२०॥

तात्पर्येण कर्मस्तवार्थत्वात्तस्य ॥२१॥

॥ अन्यमतम्॥ इदं सूत्रमधिकरणान्तरमेकेषां वनस्पतय सत्रमासतेत्यादिषु विरोधपरिहारार्थम् ॥२२॥

॥ खण्डनम्॥ तस्योत्तरत्र क्रिष्यमाणत्वादनवसरः ॥२३॥

॥ अन्यमतम्॥ वेदासन्निकर्षाधिकरणे वेदानामनित्यत्वनित्यत्वे पूर्वपक्षसिद्धान्तावित्येके ॥२४॥

॥ खण्डनम्॥ स वादः प्रागेव प्रत्युक्तः ॥ २५॥

नास्ति च सन्निकर्षशब्दस्यानित्यत्वं वक्तुं सामर्थ्यम् ॥ २६॥

न च लक्षणा प्राक् प्रयुक्तानुप्रयोगस्य स्पष्टत्वाच्चकारतः ॥ २७॥

प्राक् प्रयुक्ते हि न लक्षणा ॥ २८॥

॥ उत्तरपक्षः॥ तस्माद्यथा व्याख्यातमनवद्यं यथा व्याख्यातमनवद्यम् ॥ २९॥

॥ इत्यष्टममधिकरणम् ॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य
नरसिंहसूनोर्गणपतेः कृतिः जैमिनीयतर्कवार्तिकं समाप्तम् ॥

# पञ्चममीमांसा

## प्रथमोऽध्यायः

### पूर्वपक्षः

चत्वारो वर्णाः षडनुलोमाः षट् प्रतिलोमाश्च सङ्कीर्णजातय इति सामान्यतो वर्णजातिसङ्ग्रहः ॥१॥

तेषु प्रतिलोमसङ्कीर्णोऽन्त्यश्चण्डालाख्यो जातिदोषादस्पृश्यः पञ्चमादिपदैर्यं सम्प्रत्याहुः ॥२॥

गौतमस्मृतेस्तस्य पापिष्ठत्वस्यावगतेः ॥३॥

याज्ञवल्क्यधर्मस्मृतेः सर्वधर्मबहिष्कृतत्वस्य ॥४॥

मनुधर्मस्मृतेरधमत्वस्य ॥५॥

स्पर्शनिषेधो नेति चेदस्ति पराशरधर्मस्मृतौ तस्य चतुर्युगदूरीकरणविधिः कुतः स्पर्शप्रसक्तिः ॥६॥

आचारश्च दृश्यते बलवानिति चेत् ॥७॥

**खण्डनम्**

न तु विषयभेदात् ॥८॥

अन्यो हि पञ्चमादिनामा प्रकृतोऽन्त्यप्रतिलोमसङ्कीर्णात् ॥९॥

पञ्चजनपञ्चमानवपञ्चक्षितिपञ्चकृष्टिपञ्चचर्षणीपञ्चव्रातशब्देषु मान्त्रवर्णिकेषु यो निषादाख्यः पञ्चमः स एषः ॥१०॥

लौकिको निघण्टुश्चात्र भवति ॥११॥

गन्धर्वाः पितरो देवा असुरा रक्षांसि च पञ्चजनास्तथा निर्वचनादिति चेत्स निरुक्ते पूर्वः पक्षः ॥१२॥

चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यव इति सिद्धान्तः ॥१३॥

मनुष्यनाम्नां प्रकृतत्वात् ॥१४॥

पञ्चमानवादिपदानुगुण्याच्च ॥१५॥

निषादोऽन्त्यप्रतिलोमसङ्कीर्ण एव भवतु चण्डालनामलिङ्गादिति चेन्न नामलिङ्गानुशासने तयोः पृथक्पाठात् ॥१६॥

निघण्टुर्न धर्मशास्त्रमिति चेन्माभूदभिधानपाठे तस्य गतिः केन वार्यते ॥१७॥

रथकारस्येवोभयोः प्रदेशयोरेकस्य पाठ इति चेद्रथकारौ च द्वौ ॥ १८ ॥

सङ्कीर्णसङ्करादन्यो हि सौधन्वनः ॥ १९ ॥

सुधन्वा व्रात्यो वैश्यो यथा मनुधर्मशास्त्रम् ॥ २० ॥

वृत्तितो हीनो ब्राह्मण इत्येके ॥ २१ ॥

निषादजातिविशेषाणां किरातशबरपुलिन्दत्वोक्तेश्च स प्रतिलोमसङ्कीर्ण-चण्डालादन्यः ॥ २२ ॥

म्लेच्छत्वेनोक्तेश्च ॥ २३ ॥

म्लेच्छाः शुद्धानार्याः प्राचां भाषयाम् ॥ २४ ॥

तदेकदेशो भारतीयश्चण्डालप्लवादिनामा विज्ञायते ॥ २५ ॥

तत्र लेशतोपि न ब्राह्मणजातिरक्तम् ॥ २६ ॥

एतेषामस्पृश्यत्वाचारस्य निर्मूलत्वापत्तिरिति चेदस्ति गोमांस-भक्षणमद्यपानादिमूलम् ॥ २७ ॥

दुराचारत्यागेन शुद्धाश्चेन्न भवन्त्यस्पृश्याः ॥ २८ ॥

भागिनश्च भवन्ति शास्त्रीयेषु धर्मेषु धर्मेषु ॥ २९ ॥

## द्वितीयोऽध्यायः

### अन्यः पूर्वपक्षः

द्वावेव स्तां चण्डालौ तथाप्ययमेव भवत्वन्त्यप्रतिलोमसङ्कीर्णः ॥१॥

जात्यस्पृश्यत्वप्रसिद्धेः ॥२॥

बहिर्ग्रामवासाल्लिङ्गाच्च ॥३॥

आरण्यकः किरातादिरेव भवतु चण्डालप्लवादिनामेति चेत् ॥४॥

### खण्डनम्

न प्लवमातङ्गादिपदैरप्यस्य व्यवहरणात् ॥५॥

सङ्कीर्णत्वस्याप्रसिद्धत्वाच्च ॥६॥

हेयस्य कर्मण एषु प्रायो दर्शनादेतज्जात्यस्पृश्यत्वप्रसिद्धिः ॥७॥

हेयकर्ममूलकत्वस्य च सम्भवाल्लिङ्गमनैकान्तिकम् ॥८॥

तवानुमितिः सत्याचेत्प्रायः सूतवैदेहकमागधायोगवक्षत्तृजातीनां प्रतिलोमसङ्कीर्णानामदर्शनाच्चण्डालानामेव ब्राह्मणेभ्यः षड्गुणाधिकानां दर्शनाच्च द्विविधमवमानकरमनुमेयं स्यात् ॥९॥

ब्राह्मणकुलकन्या एव बहुला अपध्वस्ता इत्येकम् ॥१०॥

तत्रापि शूद्रैरेवेत्यपरम् ॥११॥

देशे देशे नगरे नगेरे ग्रामे ग्रामे च ब्राह्मणकुलकन्यापकीर्तिस्तम्भाः षट्कोटिमिता इत्यसत्यो लज्जाकरः पापतमश्चैष दुर्वादः ॥१२॥

तस्माद्ब्राह्मणकुलपुत्रैः सर्वैरयं खण्डयितव्यः खण्डयितव्यः ॥१३॥

## तृतीयोऽध्यायः

### अन्यः पूर्वपक्षः

चतुर्णामेव वर्णानां शास्त्रेष्वभिधानान्न निषादः स्वतन्त्रजातिः ॥१॥

निरुक्तोक्तेः का गतिरिति चेदस्तु सोऽनुलोमसङ्कीर्णः पारशवापरपर्यायः ॥२॥

देशान्तरवासिनां मतान्तरस्थानां च चतुर्षु वर्णेष्वसङ्ग्रहाच्चतुर्भ्योऽतीतश्चाङ्गीकर्तव्य इति चेन्न वैदिकजनावधित्वाच्छास्त्रीयस्य निर्देशस्य ॥३॥

सृष्टिवचनस्य च यावदर्थमेव व्यासावविरोधः ॥४॥

तस्मादनन्यथोपपत्त्या वैदिकजनैकदेशोऽयं जन्मतश्चातुर्वर्ण्यप्रभवो वक्तव्यः ॥ ५॥

न शुद्धो वर्णः कोऽपि तथा प्रसिद्ध्यभावात् ॥ ६॥

अन्त्यप्रतिलोमसङ्कीर्ण एव सर्वावरत्वात्कथनीय इति चेत् ॥ ७॥

**खण्डनम्**

तवाप्यनुकूला न प्रसिद्धिः ॥ ८॥

चण्डालनामप्रसिद्धिर्न साधिका तस्य द्व्यर्थत्वात् ॥ ९॥

न नामसादृश्यमात्रं जातिष्वप्येकत्वगमकं तथा चेत्प्रकृतो निषादनामलिङ्गात्कुतः पारशव एव न स्यात् ॥ १०॥

न च वैदिकेषु पञ्चसु जनेषु पञ्चमः पारशवः ॥ ११॥

सङ्कीर्णानां जातीनां चतुर्षु वर्णेषु सङ्ग्रहो वा न वा ॥ १२॥

सङ्ग्रहश्चेत्पारशवस्य पृथक्कीर्तनानुपपत्तिः ॥ १३॥

न चेज्जनाः षोडशातोऽधिका वा वक्तव्याः ॥ १४॥

18

सङ्ग्रहो न्याय्यः ॥ १५॥

वैदिकानां सर्वेषां तत्र विवक्षितत्वात् ॥ १६ ॥

सङ्कीर्णाश्च जातय एव पृथङ न वर्णाः ॥ १७ ॥

एवं स्थिते प्रतिलोमानपि सङगृह्यैकस्यानुलोमस्य पृथक्करणमतीव विसंष्ठुलम् ॥ १८ ॥

व्यवहारश्च प्राचीनानामधुनातनानां च पारशवं शूद्रान्न पृथक्करोति ॥ १९ ॥

तस्माद्वैदिकेषु पञ्चसु जनेषु पञ्चमो निषादश्चण्डालप्लवादिनामैव वक्तव्यः ॥ २० ॥

अत एवास्य पञ्चमत्वं पञ्चमत्वम् ॥ २१ ॥

## चतुर्थोऽध्यायः

### आक्षेपः

अथ कथं नास्ति तु पञ्चम इति चेत् ॥ १ ॥

### उत्तरम्

तद्वर्णाभिप्रायम् ॥ २ ॥

न तु जात्यभिप्रायम् ॥ ३ ॥

एकजातित्वमेव चतुर्थवर्णलक्षणमिति निषादानां तत्रान्तर्भावः ॥ ४ ॥

जातिशूद्रस्य व्याप्यत्वं शूद्रवर्णस्य व्यापकत्वम् ॥ ५ ॥

अत एव व्रात्यानां त्रैवर्णिकानां शूद्रत्वं स्मृतिप्रसिद्धं चोपपद्यते ॥ ६ ॥

प्रायश्चित्तापोद्यमिति चेत्तत्पूर्वव्यवहार एवात्रोदाहरणम् ॥ ७ ॥

शूद्राणामनिरवसितानामिति द्वन्द्वैकवद्भावस्थः पाणिनिश्चात एव सङ्गच्छते ॥ ८ ॥

स जात्यधिकार इति चेद्वर्णो न जातित एकान्तभिन्नः ॥ ९ ॥

जन्ममात्रसिद्धा जातिः संस्कारविशेषतदभावसापेक्षाश्च वर्णा इति विशेषः ॥ १० ॥

शूद्रवर्णस्य जन्मसिद्धा जातिर्नास्तीति चेदस्ति संस्कृतेतरमनुष्यत्वम् ॥ ११ ॥
त्रैवर्णिकशिशोः शूद्रत्वापत्तिरिति चेद् ब्राह्मणजातित्वशूद्रवर्णत्वयोरविप्रतिषेधाददोषः ॥ १२ ॥

अत एव जन्मना जायते शूद्र इत्युक्तिः सङ्गच्छते ॥ १३ ॥

त्वयाप्येवं सूत्रे विरोधः परिहर्तव्यः ॥ १४ ॥

जातिपञ्चमश्च चतुर्थो वर्ण इत्युक्तं भवति ॥ १५ ॥

तस्य च निरवसिततत्वमस्पृश्यत्वमिति चेन्न पात्रबहिष्कृततत्वस्य तदर्थत्वात् ॥१६॥

निषादानां म्लेच्छत्वाद्वैदिकधर्मप्रवेशानधिकार इति चेत्स्यात्सर्वेषां धर्मविधीनां प्रायः साधारणत्वात् ॥१७॥

अग्नेर्विशे विशे यज्ञियत्वाल्लिङ्गात् ॥१८॥

"जराबोधतद्विविड्ढि विशे विशे यज्ञियाय
स्तोमं रुद्राय दृशीकम् "॥ ऋग्वेदः १.१०.१२.॥

सर्वासां विशां समानदम्पतित्वात् ॥१९॥

"विश्वासां त्वविशां पतिं हवामहे सर्वासां समानं दम्पतिं भुजे सत्यगिर्वाहसम्भुजे । अतिथिं मानुषाणां पितुर्नयस्यासया । अमी च विश्वे अमृता स आवयो हव्या देवेष्वावयः ॥ ऋग्वेदः १.१२७.८॥

अत एवार्यवाचो म्लेच्छवाचश्चेति दस्यूनां स्मार्तो विभाग उपपद्यते ॥२०॥

म्लेच्छेभ्यो दस्यवो नातिरिच्यन्ते दस्युपदस्य च प्राचां भाषायां शुद्धानार्यपरत्वात् । म्लेच्छानामार्यवाक्त्वमार्यधर्मप्रविष्टत्वात् ॥२१॥

भारते कल्किप्रस्तावे दस्युम्लेच्छशब्दयोरेकस्मिन्नर्थ उपयोगश्चात्रोदाहर्तव्यः । आर्यधर्मातिगो दृश्यत इति चेदत एव तस्यास्पृश्यत्वोपपत्तिः ॥२२॥

मतान्तरप्रवेशे तदभावोपपत्तिश्च ॥ २३ ॥

तच्च स यदा धर्मशासनबद्धः स्यात्तदोपरमेदुपरमेत् ॥ २४ ॥

## पञ्चमोऽध्यायः

### अन्य आक्षेपः

चतुर्वर्णभिन्नो निरुक्ते निषाद उक्त इति चेत् ॥ १ ॥

### उत्तरम्

सप्तानामृषीणामगस्त्याष्टमानामितीव स निर्देशः ॥ २ ॥

पञ्चवर्णप्रसक्तिरिति चेद्रथकारवदुपपत्तिः ॥ ३ ॥

रथकारस्य शूद्रत्वं व्रात्यत्वात् ॥ ४ ॥

अत एव तक्षायस्करमिति महाभाष्योदाहरणं सङ्गच्छते ॥ ५ ॥

अयं चोक्तश्चतुर्वर्णभिन्नः पूर्वतन्त्रभाष्ये पूर्वतन्त्रभाष्ये ॥ ६ ॥

## षष्ठोऽध्यायः

### अन्यः पूर्वपक्षः

निषण्णं पापकमस्मिन्निति निषादनिर्वचनात्सोऽस्पृश्योऽनुमीयत इति चेत् ॥१॥

### उत्तरम्

तत्पापं किं जन्मान्तरीयमुताहो एतज्जन्मकृतम् ॥२॥

आद्ये पूर्वास्वपि जातिष्वस्पृश्याः स्युः ॥३॥

पिपीलिकादेरत्यन्तास्पृश्यत्वापत्तिश्च ॥४॥

एतज्जन्मकृतं चेन्न जन्मतोऽस्पृश्यत्वम् ॥५॥

वृषलवन्निर्वचनोपपत्तिः ॥६॥

सोऽन्यथापि निर्वक्तुं शक्य इति चेच्छ्वपचवत् ॥७॥

मानवजातिषु कालवशादुत्कर्षस्य चापकर्षस्य च सम्भवाद्गुणकृतं तन्नामनिर्वचनं निर्वक्तृसमयानुसारि न सार्वकालिकम् ॥८॥

श्वपचेन वृषलेन च निषादस्यान्यानि नामानि निन्दालिङ्गानि

व्याख्यातानि ॥ ९ ॥

श्वपचत्वानन्वयेन तन्मूलको निषेधश्च व्याख्यातो व्याख्यातः ॥ १० ॥

## सप्तमोऽध्यायः

### धर्माधिकारनिरूपणम्

धर्माधिकारस्य सर्वसाधारणत्वमुक्तम् ॥ १ ॥

विशेषतश्चेन्द्रः पञ्चक्षितीनामुच्यते निगमे ॥ २ ॥

"य एकश्चर्षणीनां वसूनामिरज्यति ।
इन्द्रः पञ्चक्षितीनाम्" ॥ ऋग्वेदः १.७.९. ॥

पाञ्चजन्यश्च ॥ ३ ॥

"सवज्रभृद्दस्युहा भीम उग्रः
सह सचेताः शतनीथ ऋभ्वा ।
चम्रीषो न शवसा पाञ्चजन्यो
मरुत्वान्नो भवत्विन्द्र ऊती ॥ ऋग्वेदः १.१००.१२. ॥

इन्द्राय पञ्चजनप्रजाघोषः ॥ ४ ॥

“यत्पाञ्चजन्यया विशेन्द्रे घोषा असृक्षत ।
अस्पृणद्बर्हणाविपोर्श्र्यो मानस्य सक्षयः”॥ ऋग्वेदः ८.५२.७. ॥

मित्राय यमस्तेषाम् ॥५॥

“मित्राय पञ्चयेमिरे जना अभिष्टिशवसे ।
स देवान् विश्वान् बिभर्ति ॥” ऋग्वेदः ३.५९.८. ॥

दमेदम उपास्योऽग्निः ॥६॥

“यः पञ्चचर्षणीरभिनिषसाद दमेदमे
कविर्गृहपतिर्युवा” ॥ ऋग्वेदः ७.१५.२. ॥

कर्मेच्छासबन्धुत्वं सोमस्य गिरा परिष्करणं च ॥७॥

“गिरा यदि सबन्धवः पञ्चव्राता अपस्यवः ।
परिष्कृण्वन्ति धर्ण सिम्” ॥ ऋग्वेदः ९.१४.२. ॥

निषादया जनश्रुतिश्चात्रोदाहर्तव्या ॥८॥

तत्र निषादः पारशव इति चेन्न तस्य कूटं दक्षिणेतिलिङ्गात् ॥९॥

आर्यसुतस्य कूटदक्षिणाकत्वमयुक्तम् ॥१०॥

कूटं चायःपिण्डम् ॥११॥

तस्मात्पञ्चमोऽपि यथालिङ्गश्रुतिधर्माधिकारी धर्माधिकारी ॥ १२ ॥

## अष्टमोऽध्यायः

### सङ्कीर्णचण्डालास्पृश्यत्वनिराकरणम्

अन्त्यत्प्रतिलोमसङ्कीर्णोऽपि नास्पृश्यः ॥ १ ॥

तस्य पापिष्ठत्वादिविधायकानि स्मृतिवचनानि प्रत्यक्षवेदविरोधहेतुदर्शनदोषाभ्यां दुर्बलानि ॥ २ ॥

तस्य शूद्रे वर्णे सङ्ग्रहात्तद्धर्माधिकारो वेदोक्त इति प्रत्यक्षवेदविरोधः ॥ ३ ॥

प्रतिलोमसम्बन्धद्वेषो हेतुः ॥ ४ ॥

कयोश्चिन्मूलदम्पत्योर्निबन्धनातिक्रमणदोषाय तद्वंशस्य यावत्सर्गं पातित्यमिति को नामा द्वेषी ब्रूयात् ॥ ५ ॥

यथात्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयादिति स्मृतिवचने क्षीरविक्रयद्वेषो हेतुः ॥ ६ ॥

यथावेदं हित्वा तदितरविद्यासुकृतपरिश्रमस्य द्विजस्य सान्वयस्य शूद्रत्वविधायके वेदेतरविद्याद्वेषः ॥ ७ ॥

यथैकादशादिवर्षकन्या दातृनरकाभिधायके प्रौढकन्याविवाहद्वेषः ॥ ८ ॥

एवं चेत्करोतु तत्कर्तृनिन्दां तज्जातनिन्दा कथमिति चेदस्ति तत्राप्युदाहरणम् ॥ ९ ॥

आसुरादिविवाहद्वेषेण तज्जातनिन्दा हि स्मर्यते ॥ १० ॥

हेतुशब्दस्य सौत्रस्य यथा शाबरभाष्यमर्थे कथिते वा प्रकृते तद्दर्शनमनिवार्यम् ॥ ११ ॥

द्वेषात्केचिद्बहिष्कृतवन्तोऽन्त्यप्रतिलोमसङ्कीर्णांस्तत्स्मृतेर्बीजमिति ॥ १२ ॥

तदेवोपपन्नतरं हि वैदिकवचनकल्पनात् ॥ १३ ॥

अस्ति न जनमित्यादिति श्रुतिरिति चेद्वैदिकविरोधिजनपरं प्रकरणान्नान्त्यप्रतिलोमसङ्कीर्णपरम् ॥ १४ ॥

न वा निषादपरं निषादपरम् ॥ १५ ॥

॥ इति पञ्चममीमांसा समाप्ता ॥

# दर्शनमाला

## प्रथमं दर्शनम्

इन्द्रो विश्वस्येशानः ॥ १॥

तस्य शक्तिः संसारं चक्रवन्नीचैरुच्चैश्च भ्रामयति ॥ २॥

ततो देशानां उन्नत्यवनती पर्यायतः ॥ ३॥

विज्ञानस्याभिवृद्धिरुन्नतिः ॥ ४॥

क्षयोऽवनतिः ॥ ५॥

देशैर्जातयो व्याख्याताः ॥ ६॥

उन्नतेः पौरुषं कारणम् ॥ ७॥

प्रबलमावश्यकत्वं पौरुषस्य ॥ ८॥

तपो वार्ता चेति पौरुषं द्वेधा ॥ ९॥

सन्ततमिन्द्रस्य स्मरणं तपः ॥ १०॥

वाणिज्यादय उपायाः सर्वे वार्ता ॥ ११ ॥

सङ्घस्यैकमत्ये तस्या एव प्रथममुपस्थितिः ॥ १२ ॥

अन्यदा तपः शरणम् ॥ १३ ॥

सङ्घस्य दुर्बलत्वे च ॥ १४ ॥

तपसा वीर्यमाध्यात्मिकं वर्धेत ॥ १५ ॥

तेनापदो निवारणम् ॥ १६ ॥

आवश्यकस्य च जयः ॥ १७ ॥

वार्तया सम्पदाधिभौतिकी वर्धेत ॥ १८ ॥

तेनापदो निवारणम् ॥ १९ ॥

आवश्यकस्य च जयः ॥ २० ॥

## द्वितीयं दर्शनम्

तेजो रसश्च जगतः पूर्वौ ॥ १ ॥

ताविन्द्रासोमौ ॥ २ ॥

अविभाज्यौ ॥ ३॥

येनानुभवति स इन्द्रः ॥ ४॥

यमनुभवति स सोमः ॥ ५॥

अनुभूयमानं तेज एव रसो भवति ॥ ६॥

तस्मात्सोमस्येन्द्रप्रकृतिः ॥ ७॥

अस्मिन्ननुभवे तृतीयोऽहङ्कर्ता सम्पद्यते ॥ ८॥

स आत्मा ॥ ९॥

व्यक्तित्ववान् ॥ १०॥

इन्द्रस्यान्तरः ॥ ११॥

रसानुभूतेः प्रागिन्द्रासोमौ न द्वौ भवतः ॥ १२॥

तदेकं वस्तु सन्नाम ॥ १३॥

सा सृष्टेः प्रागवस्था ॥ १४॥

रसानुभवः सृष्टेरारम्भकः ॥ १५॥

तदा त्रिपुटीनिष्पत्तिः ॥ १६ ॥

तत्रात्मा वैश्वानर उच्यते ॥ १७ ॥

एषा प्रथमा सृष्टिः ॥ १८ ॥

## तृतीयं दर्शनम्

अनुभूतिपाके विकृतो रसोऽन्तरिक्षम् ॥ १ ॥

तस्य तत्त्वं सूक्ष्मा आपः ॥ २ ॥

आत्मा तेजसा ताः पुनरन्वभूत् ॥ ३ ॥

तत्र क्रियायां वेपनाद्वायुर्जातः ॥ ४ ॥

वायुयोगात्तेज उष्णमासीत् ॥ ५ ॥

सोऽग्निः ॥ ६ ॥

तस्य भौतिकं रूपं वायुः ॥ ७ ॥

प्रकाशस्तेजस आवेशात् ॥ ८ ॥

तत्र तत्र पाकातिशयात्सोऽग्निरनेकसूर्यमण्डलाकृतिरासीत् ॥ ९ ॥

अग्निपाकादन्तरिक्षे जातः स्वेद एव स्थूला आपः ॥ १० ॥

पक्वा आपो घनीभूता पृथिवी ॥ ११ ॥

अन्तरिक्षं वायुरग्निरापः पृथिवी च पञ्चमहाभूतानि ॥ १२ ॥

वृथिव्याः पितामहोऽग्निः पुनः पृथिव्याः पुत्र आसीत् ॥ १३ ॥

एवं त्रीणि दाहकानि तेजांसि ॥ १४ ॥

आदौ वायुमाविशत्तेज एकम् ॥ १५ ॥

सूर्यमण्डलं द्वितीयम् ॥ १६ ॥

पार्थिवं तृतीयम् ॥ १७ ॥

आदिमान्तिमयोर्निर्मित्यै ज्वलनम् ॥ १८ ॥

आदिमस्य विद्युदित्यसाधारणं नाम ॥ १९ ॥

एषा द्वितीया सृष्टिः ॥ २० ॥

## चतुर्थं दर्शनम्

सूर्यरश्मिकृतात्पाकाद्वातादीनि भूतान्यन्तरिक्षे तत्र तत्र स्थूल-

पिण्डान्यभूवन् ॥ १॥

तानि भूम्यङ्गारकादिगोलानि ॥ २॥

पुनः पाकाद्गोलान्यभितः सूक्ष्म अपां लोकाः प्रादुरभवन् ॥ ३॥

अन्तरिक्षस्य विजृम्भमाणानि शरीराणि तानि ॥ ४॥

सूर्यादीनाविशदात्मा ॥ ५॥

सूर्यमाविशन्नुत्तम उच्यते ॥ ६॥

भूमिं प्रथमः ॥ ७॥

अपां लोकं मध्यमः ॥ ८॥

वैश्वानरनाम्ना च प्रथमस्य व्यवहारः ॥ ९॥

इन्द्रनाम्ना च मध्यमस्य ॥ १०॥

सूर्य इति शरीरनाम्ना चोत्तमस्य ॥ ११॥

मित्रवरुणार्यमणश्च नामभिरुत्तममध्यमप्रथमाः ॥ १२॥

बह्मविष्णुरुद्राश्च ॥ १३॥

एषा तृतीया सृष्टिः ॥ १४॥

## पञ्चमं दर्शनम्

भूमिर्नारीव सूर्यात्पुंस इव गर्भं दधौ ॥ १ ॥

ततो मिथुनमजायत ॥ २ ॥

तावाद्यौ नारीनरौ ॥ ३ ॥

तयोः पुरुषं मनुमाहुः ॥ ४ ॥

सम्प्रति तादृशाश्चत्वारो मनवो गताः ॥ ५ ॥

सम्प्रति पञ्चमस्य मनोः कालः ॥ ६ ॥

तस्मात्पञ्चविधाः प्रजाः क्षितौ दृश्यन्ते ॥ ७ ॥

नीलाः श्यामाः पीताः शोणाः शुक्लाश्च ॥ ८ ॥

अस्ति ऋतुकालो भूमेः ॥ ९ ॥

तदा ततः प्रजोत्पत्तिः ॥ १० ॥

एकैकं ऋतुमेकैकं मन्वन्तरमाहुः ॥ ११ ॥

इतरे प्राणिनश्च मनुष्यवत्सूर्यरश्मिबीजेभ्यः पृथिव्यां जायन्ते ॥ १२ ॥

सर्वत्राद्यप्राणिसर्गो जङ्गमस्थावरेषु सूर्यात् ॥ १३ ॥

अनन्तरं प्राणिनां सर्गः प्राणिभ्यः ॥ १४ ॥

तस्मादस्माकमाद्यः पिता सूर्यः ॥ १५ ॥

आद्या माता पृथिवी ॥ १६ ॥

एषा चतुर्थी सृष्टिः ॥ १७ ॥

## षष्ठं दर्शनम्

सङ्कुचितस्याभिवृद्धिः सर्गस्य तत्त्वम् ॥ १ ॥

अभिवृद्धस्य सङ्कोचः प्रलयस्य ॥ २ ॥

सर्ग ईश्वरस्ये ष्टं कृत्यम् ॥ ३ ॥

प्रलयः प्रकृतिधर्मः ॥ ४ ॥

यथा भोगो जीवस्येष्टं कृत्यम् ॥ ५ ॥

निद्रा प्रकृतिधर्मः ॥ ६ ॥

अविभक्तस्य वस्तुनः स्वभावः प्रकृतिः ॥ ७ ॥

विभक्ते सा विभक्ता ॥ ८ ॥

चिच्छक्तिर्जडशक्तिश्चेति ॥ ९॥

आदेरहङ्कर्तुरिच्छैवेश्वरस्येष्टमुच्यते ॥ १०॥

स्वस्येष्टं प्रकृतेः साहाय्यकेन साधयति ॥ ११॥

जडशक्तिसमुल्लासः संसारः ॥ १२॥

तत्रैव प्रायो सर्वजीवानां यत्नः ॥ १३॥

चिच्छक्तिसमुल्लासः सिद्धिः ॥ १४॥

तां प्राप्तुं योगिनो यतन्ते ॥ १५॥

उभयशक्त्युपरमो निर्वाणं बुद्धस्य ॥ १६॥

अपवर्गो गौतमस्य ॥ १७॥

मोक्षः साङ्ख्यानाम् ॥ १८॥

निःश्रेयसं कणादस्य ॥ १९॥

चिच्छक्तिसमुल्लासः सम्पत् बादरायणस्य ॥ २०॥

स एवोत्तमः पुरुषार्थ इति वासिष्ठः ॥ २१॥

उपरमो मोक्ष श्चेदीश्वरस्य सर्गो बन्धः स्यात् ॥ २२॥

तस्मात्सर्गे ध्येयं चिच्छक्त्युल्लसनम् ॥ २३॥

तदैवेश्वरः साधयितुं प्रवर्तते ॥ २४॥

तत्र जडशक्त्युल्लासपोषकाणां भावानां संहार आवश्यकः ॥ २५॥

स एवेन्द्रस्य वृत्रवधः ॥ २६॥

## सप्तमं दर्शनम्

यथोत्तरः श्रेष्ठः प्रकृतेः परिणाम इत्येके ॥ १॥

न व्यापकं सूत्रमेतदिति वासिष्ठः ॥ २॥

क्षीरादौ विपर्यय दर्शनात् ॥ ३॥

यौवनादनन्तरं वार्धकस्य च दर्शनात् ॥ ४॥

चिच्छक्तिपरिणामाभिप्रायः स वाद इति चेत् ॥ ५॥

निकृष्टबीजादुत्कृष्टप्राण्यसम्भवादनुदाहरणो वादः ॥ ६॥

उत्कृष्टजन्मान्तर इति चेद् अप्रत्यक्षो विषयः ॥ ७॥

तस्माद्यथा विषयमुत्कर्षोऽपकर्षश्च परिणामे ॥ ८॥

ईश्वरस्य ऐच्छिके तूत्कर्ष एव नित्यः ॥९॥

संसारिण उभयं प्रकृतेरधीनत्वात्तस्य ॥१०॥

सिद्धानामीश्वरवत् ॥११॥

# गणपतिदर्शनम्

## प्रथमोऽध्यायः

### प्रथममाह्निकम्

आत्मा परमो विश्वस्यान्तरे ॥१॥

अणोरणीयान्वस्तुतः ॥२॥

महतो महीयान्निजशक्त्या ॥३॥

तमेव सत्यं लोकमाहुः ॥४॥

स एव परं ब्रह्मोच्यते ॥५॥

तस्य शक्तिः समन्ततः प्रसरन्ती विश्वस्य सर्गायाभूदिति तद्विदां दर्शनम् ॥६॥

सृष्टस्य सृष्टस्य पुनरन्तरः परमो भवति प्राणो यत्र यत्र ॥७॥

स जीव उच्यते ॥८॥

प्रसरन्त्याः शक्तेः प्रान्तदेशेष्वेवैते जीवलोकाः ॥ ९ ॥

जीवलोकानां सत्यस्य परमात्मनश्च मध्ये शुद्धा महती परमात्मशक्तिरेव ज्वलन्ती भवति ॥ १० ॥

तां शुद्धां तपो लोकमाहुः ॥ ११ ॥

परमस्य हि तत्तपः ॥ १२ ॥

आत्मशक्तिं विजृम्भयितुं सङ्कोचयितुं च परमः प्रभवति ॥ १३ ॥

तस्माद्विश्वसर्गप्रलयौ तदधीनौ ॥ १४ ॥

## द्वितीयमाह्निकम्

विश्वान्तरस्य परमात्मस्थानत्वे तस्य रूपं वक्तव्यम् ॥ १ ॥

परमात्मनोऽनर्थान्तरभावे सप्तमी नोपपद्यते ॥ २ ॥

बुद्ध्यपेक्ष एकस्यैवाधाराधेयत्वेन निर्देश इत्यदोषः ॥ ३ ॥

हृदि ह्येष आत्मेतिवत् ॥ ४ ॥

हृदेव खल्वात्माऽयं यथामनन्ति हृदयशब्दार्थनिर्वचने छन्दोगाः ॥ ५ ॥

प्रलये विश्वस्योपसंहारात्तत्कालिकस्य परमात्मनो विश्वान्तरत्वानुपपत्तिरिति चेत्सर्गकालिकविवक्षातो न दोषः ॥ ६॥

अलोक्यत्वात्परमात्मनो लोकत्वानुपपत्तिरिति चेत् ॥ ७॥

लोककत्वादर्थसङ्गतिः ॥ ८॥

उभयार्थकत्वं लोकशब्दस्यान्नशब्दवत् ॥ ९॥

परमस्य स्वरूपतो जीवत्वमिति चेत् एकस्यानेकान्तरत्वानुपपत्तिः ॥ १०॥

आकाशवदुपाधिवशादनेकान्तरत्वसिद्धिरिति चेदणोरणीयस्त्वं नोपपद्यते ॥ ११॥

अव्यक्तत्वेन प्रतिबिम्बनानुपपत्तिः ॥ १२॥

तस्मादन्य एव भावो जीव इति चेत् ॥ १३॥

प्रतिबिम्ब एव भवति ॥ १४॥

अव्यक्तस्य व्यक्तत्वेन प्रतिबिम्बनं दोषाय स्यान्नाव्यक्तत्वेनापि ॥ १५॥

स्वप्नदृष्टव्यक्तिष्वात्मप्रतिबिम्बनवत्तदुपपत्तिः ॥ १६॥

प्रतिबिम्बग्राहकत्वं प्राणस्योपरिष्टाद्व्याख्यास्यामः ॥ १७॥

परमस्य लोकत्वेन शक्तेर्लोकत्वं व्याख्यातम् ॥ १८॥

परमस्येच्छावत्वान्निजशक्तिप्रसारणोपसंहरणसङ्गतिः ॥ १९॥

अस्माकमिच्छातपसी इव परमस्येच्छातपसी परमस्येच्छातपसी ॥ २०॥

॥ इति गणपतिदर्शने प्रथमोऽध्यायः ॥

## द्वितीयोऽध्यायः

### प्रथममाह्निकम्

स परमात्मा प्राणिति प्राणेन विना ॥ १॥

तेन प्राणिति सर्वः प्राणोपि ॥ २॥

तस्मात्तं प्राणानां प्राणमाहुः ॥ ३॥

स मनुते मनसा विना ॥ ४॥

इच्छति चाहङ्कारं विना ॥ ५॥

तेन मनुते मनः सर्वमपि ॥ ६॥

इच्छति च सर्वो जीवः ॥ ७॥

तस्मात्तं मनसां मन आहुश्चेतनानां च चेतनम् ॥ ८॥

स पश्यति चक्षुषा विना ॥ ९॥

तेन पश्यति चक्षुः सर्वमपि ॥ १०॥

तस्मात्तं चक्षुषां चक्षुराहुः ॥ ११॥

स शृणोति श्रोत्रेण विना ॥ १२॥

तेन शृणोति श्रोत्रं सर्वमपि ॥ १३॥

तस्मात्तं श्रोत्राणां श्रोत्रमाहुः ॥ १४॥

स वदति वाचा विना ॥ १५॥

तेन वदति वाक् सर्वापि ॥ १६॥

तस्मात्तं वाचां वाचमाहुः ॥ १७॥

एतेन तस्यान्यानि ज्ञानानि कर्माणि च व्याख्यातानि ॥ १८॥

इतरेषां ज्ञानान्तरकर्मान्तराणां च तदधीनत्वम् ॥ १९॥

द्वितीयमाह्निकम्

तदायत्तानि चेत्सर्वाणि ज्ञानानि कर्माणि च सर्वो दुष्कृतकार्यनपराधः स्यात् ॥ १ ॥

श्लाघापात्रं च न स्यात्सर्वः सुकृतकारी ॥ २ ॥

नरकनाकप्राप्त्योरन्याय्यत्वनिष्कारणत्वे च तद्विषये प्राप्नुयाताम् ॥ ३ ॥

प्रत्युत परमेश्वरस्य क्वचिद्दुष्कृतकारित्वं च प्रसज्येत ॥ ४ ॥

ज्ञातुं कर्तुं च शक्तिरेव परमाधीना न ज्ञानकर्मविशेषा इति नैते दोषाः ॥ ५ ॥

एवं चेन्मनःप्रभृतीनामेवापराधो न जीवस्येति चेन्नेच्छापूर्वकत्वात् सुकृतदुष्कृतरूपाणां धीकर्मणाम् ॥ ६ ॥

इच्छा च परमायत्तेति चेत् ॥ ७ ॥

इषितुं शक्तिरेव परमायत्ता नेच्छाविशेषा इत्यदोषो नेच्छा विशेषा इत्यदोषः ॥ ८ ॥

॥ इति गणपतिदर्शने द्वितीयोऽध्यायः ॥

# तृतीयोऽध्यायः

## प्रथममाह्निकम्

यया प्राणिति परमः सा तस्य क्रियाशक्तिः ॥ १ ॥

तस्या एव बलाख्या ॥ २ ॥

व्याप्नोति भुवनं तपनशक्तिरिव सूर्यस्य ॥ ३ ॥

तामेव विद्युच्छक्तिमाहुः ॥ ४ ॥

पचति भुवनान्यजस्रम् ॥ ५ ॥

कालः पुमाख्यया ॥ ६ ॥

कालिस्त्र्याख्यया ॥ ७ ॥

संहारशक्तिरिति भीमा वर्ण्यते ॥ ८ ॥

सृजत्यपि ॥ ९ ॥

पूर्वपूर्वावस्थासंहार एवोत्तरोत्तेरावस्थासर्गो भूतानाम् ॥ १० ॥

भूतान्याविश्य व्यष्टिशक्तिश्च भवति ॥ ११ ॥

अस्मासु सा प्राणः ॥ १२ ॥

अपां सारस्तदुपाधिः ॥ १३ ॥

प्राणापानव्यानोदानसमानाः प्राणतरङ्गाः ॥ १४ ॥

संसारिषु सा प्रतिकूलपाकाय ॥ १५ ॥

तस्या आनुकूल्याय तामेवोपासीत ॥ १६ ॥

आद्यया विद्यया भक्तः ॥ १७ ॥

संवर्गविद्यया योगी ॥ १८ ॥

उच्छ्वासनिश्वासप्रत्यवेक्षणाभ्यासः संवर्गविद्या ॥ १९ ॥

तदा क्रियासंविदोस्समावेशः ॥ २० ॥

संविदा प्रत्युद्गम्यमाना क्रिया न चलति मिथ्या ॥ २१ ॥

तदा सानुकूला भवेत् ॥ २२ ॥

संसारिणः प्रहरच्छस्त्रं शक्तिरियम् ॥ २३ ॥

योगिनां साधितम् ॥ २४ ॥

## द्वितीयमाह्निकम्

प्राणनं क्रियाशक्तेरन्यच्चेत् क्रियायाः क्रियान्तरमिति स्यात् ॥ १॥

अनन्यच्चेत् क्रियाशक्तेस्तत्रकरणत्वानुपपत्तिः ॥ २॥

शक्तेः क्रियातो भेदाददोषः ॥ ३॥

विद्युच्छक्तिस्तेजोविशेषश्चेच्छक्तिर्द्रव्यं स्यात् ॥ ४॥

तेजोविशेषशक्तिश्चेत्परमस्य न स्यात् ॥ ५॥

सा तेजोविशेषोपाधिनिरपेक्षैवात्रोदितेत्यदोषः ॥ ६॥

शक्तिः कालश्चेद्द्रव्यं स्यात् ॥ ७॥

कालो द्रव्यमिति वैशेषिकसङ्केतमात्रमिति नेदं चोद्यम् ॥ ८॥

शक्तेरनुग्रहासम्भवाद्भक्तिवैयर्थ्यमिति चेत् ॥ ९॥

तद्वतोनुग्रह इति सङ्गतिः ॥ १०॥

॥ इति गणपतिदर्शने तृतीयोऽध्यायः ॥




Ganapati Muni: A Pencil Sketch
by Madam Jane Adames

# शक्तिदर्शनम्

## प्रथमोऽध्यायः

### प्रथममाह्निकम्

शक्तिर्विश्वस्य मूलम् ॥ १॥

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायतेति निगमोऽत्र भवति ॥ २॥

तपः शक्तिः ॥ ३॥

तत्साधनेषु तत्पदमुपचारात् ॥ ४॥

सत्यं ज्ञातृ ॥ ५॥

ऋतं ज्ञानम् ॥ ६॥

ज्ञातृज्ञानाभ्यां शक्तिरतिरिक्ता चेज्जडा प्रसज्येतेति चेत् ॥ ७॥

तयोरविभागे चित्केवलशक्तिरूपेत्यदोषः ॥ ८॥

ज्ञातव्यानुधावनेषु विभागः ॥ ९॥

शक्तेरेव ज्ञाता ज्ञानं च भागौ ॥ १०॥

अविकृतेर्भागानुपपत्तिरिति चेत् ॥ ११॥

धर्मित्वधर्मत्वाभ्यां नच्छेदादित्यदोषः ॥ १२॥

अहङ्कर्तृत्वं धर्मित्वम् ॥ १३॥

अहङ्कारान्ममकारः ॥ १४॥

ममकारादहङ्कर्तुर्ज्ञातुर्ज्ञानं धर्मः स्यात् ॥ १५॥

यत्राहङ्कृतिस्तत्रान्तरनिष्पत्तिः ॥ १६॥

शेषे तस्य ममकारः ॥ १७॥

महतो महीयसी शक्तिर्वस्तुतः ॥ १८॥

अणोरणीयस्यन्तरदृष्ट्या ॥ १९॥

नन्वन्तर आत्माचेत्तस्यानुदयः ॥ २०॥

अन्यश्चेन्न जानातीति चेत् ॥ २१॥

आत्मा स्वरूपं चेच्छक्तेर्नातिरिच्यते ॥ २२॥

अहं कर्ता चेदुदयेन दोषप्रसक्तिरहङ्कारस्यादिमत्त्वात् ॥ २३ ॥

विशेषणोदयाद्विशेष्योदय उच्यते ॥ २४ ॥

नन्वन्तरस्य नियतो भागश्चेच्छक्तेर्विलक्षणावंशौ प्रसज्येयाताम् ॥ २५ ॥

अन्यथा कुतो न सर्वत्राहङ्कार इति चेत् ॥ २६ ॥

प्रदेशनियमो नास्ति तथाप्येकत्रैव तदुदयनियमः समष्टौ व्यष्टौ चेत्यदोषः ॥ २७ ॥

समष्टावहङ्कर्ता महेन्द्रः ॥ २८ ॥

यत्र तदाविर्भावः सा पराशक्तिरदितिः ॥ २९ ॥

अदितिस्तपो महेन्द्रः सत्यं माहेन्द्रं ज्ञानमृतमित्युक्तं भवति ॥ ३० ॥

## द्वितीयमाह्निकम्

ज्ञातुः पृथग्भावे ज्ञानं शक्तिरुत्सर्गात् ॥ १ ॥

एतेन महेन्द्रस्य शक्रत्वं व्याख्यातम् ॥ २ ॥

शक्तशक्रावेकार्थौ शब्दौ ॥ ३ ॥

ज्ञानं बुद्धिश्चेद्गुणत्वप्रसङ्गोऽन्यच्चेदप्रसिद्धमिति चेत् ॥ ४॥

द्रव्यांश एव न द्रव्याश्रयमिति न गुणः ॥ ५॥

तथा यदि शक्तेरंशत उत्पत्तिविनाशौ प्रसज्येयातामिति चेत् ॥ ६॥

तत्र ज्ञेयभास एव तस्योत्पत्तिरुपचर्यते ॥ ७॥

ज्ञेयतिरोधानमेव विनाशः ॥ ८॥

ज्ञेयबहुत्वेन ज्ञानबहुत्वोपचारः ॥ ९॥

तस्मान्न बुद्धेर्ज्ञानमर्थान्तरम् ॥ १०॥

ज्ञानस्य कोशत्वप्रसङ्ग इति चेत् ॥ ११॥

तद्बाहुल्यात्तद्वादः ॥ १२॥

अन्यत्र तद्बाहुल्यं कथमिति चेत् ॥ १३॥

सर्वव्यापकत्वात् ॥ १४॥

ननु दृश्यं ज्ञानादन्यच्चेन्न शक्तिर्विश्वस्य मूलम् ॥ १५॥

अनन्यच्चेन्न दृष्टिदृश्यभेद इति चेत् ॥ १६॥

घटानां मृदिव दृश्यानां प्राण उपादानं स च बुद्धेर्मूलरूपमित्यदोषः ॥१७॥

व्यष्टिचित्स्वप्नप्रपञ्चस्येव समष्टिचिज्जाग्रत्प्रपञ्चस्योपादानम् ॥१८॥

प्राणः सर्वेषां भूतानामुपादानं नाणूनि प्रधानं वेत्युक्तं भवति ॥१९॥

स्मृतिभूतानामितरेतराश्रयत्वादसिद्धिरिति चेत् ॥२०॥

बीजवृक्षवत्तत् सिद्धिः सर्गस्यानादित्वपक्षे ॥२१॥

एतत्कल्पे सर्गाय पूर्वकल्पस्मृतयो बीजानीति ॥२२॥

भावनात्मिका स्मृतिः सर्गस्य सादित्वपक्षे संसारस्य हेतुः ॥२३॥

यद्यद्भावयामास तत्तद्बभूवेति ॥२४॥

न केवलमनुभूतचिन्ता भावना च हि स्मृतिः ॥२५॥

सूर्यकिरणाः प्रथमानि बीजान्यनन्तराणि वृक्षेष्विति पूर्वत्र दृष्टान्तो दुर्बलः ॥२६॥

न वा तेषामपि बीजरससंस्कारादेव बीजत्वात् ॥२७॥

बीजरससंस्काराणामपि सादित्वं पृथिव्याः सादित्वादिति चेत् ॥२८॥

गतपृथिवीबीजरससंस्कारात् ॥२९॥

गतपृथिवीबीजरससंस्कारो गतादित्य एव नामुष्मिन्निति चेत् ॥ ३०॥

शक्तिलीनस्य पुनः प्रादुर्भावे सर्वे पूर्वसंस्कारा इत्यदोषः ॥ ३१॥

अनैसर्गिकस्यानुत्पत्तेः सर्गस्य सादित्वपक्षो दुर्बलः ॥ ३२॥

गूढनिसर्गस्य व्यक्तत्वसम्भवाददोषः ॥ ३३॥

धाता यथा पूर्वमकल्पयदिति निगमाद्दुर्बल इति चेत् ॥ ३४॥

गतकल्पसत्तया तृप्येद्वचनं नानादित्वं साधयेत् ॥ ३५॥

एवमुभावपि पक्षौ स्थातुं प्रभवतः ॥ ३६॥

पूर्वत्रानवस्था क्षन्तव्यो दोषः ॥ ३७॥

उत्तरत्र बहुकालगूढनिसर्गत्वदोषः ॥ ३८॥

महाभूतानां क्रमश उत्पत्तेः ॥ ३९॥

ब्रह्माण्डापरपर्यायाणां सूर्यकुटुम्बानामेकदैवानुत्पत्तेः ॥ ४०॥

एकदैवान्तासम्भवात् ॥ ४१॥

तेष्वन्तग्रहाणां च वयो व्यत्यासात् ॥ ४२॥

विश्वगतेरभिवृद्धेर्लक्ष्यत्वात् ॥ ४३॥

अभीद्धात्तपस इति सापेक्षवचनसामर्थ्याच्चोत्तरः पक्षो ज्यायानिति वासिष्ठः ॥ ४४ ॥

पूर्वकल्पाङ्गीकारे प्रलयाङ्गीकारोऽन्यथा वचनविरोध इति चेत् ॥ ४५ ॥

पूर्वब्रह्माण्डकल्पनमेव पूर्वकल्प इत्यदोषः ॥ ४६ ॥

पुराणानां प्रणाशो नवानां चोत्पत्तिर्गोलानां प्राणिवत् ॥ ४७ ॥

वयो व्यत्यासश्च ॥ ४८ ॥

प्रणष्टस्य रूपान्तरग्रहणमव्यक्तस्य व्यक्तीभावश्चेति नवोत्पत्तिर्द्वेधा ॥ ४९ ॥

सर्गात्प्रागेका शक्तिरात्मनि पाकादभीद्धा ततः सर्गः क्रमादित्युक्तं भवति ॥ ५० ॥

कदाचिदपि न सर्वप्रलयः ॥ ५१ ॥

नैसर्गिकश्चेत्सर्गः प्रधानवादो वाऽणुवादो वा प्रसज्येतेति चेत् ॥ ५२ ॥

चितोऽपि तन्निसर्गाददोषः ॥ ५३ ॥

ननु शक्तिश्चेत्सृजति पुरुषसृष्टिवाक्यानां विरोधः ॥ ५४ ॥

पुरुषश्चेत्तस्यैवानादिवस्तुत्वमिति चेत् ॥ ५५ ॥

वस्तुतः पुरुषस्य शक्तेरनन्यत्वात्पृथग्भावेऽपि निमित्तत्वाच्चाविरोधः ॥ ५६॥

सद्ब्रह्मेत्यविभक्तस्य चिद्रूपस्यैव नामनी ॥ ५७॥

ताभ्यां पुरुषनिर्देशश्च न विरुध्यते तत्त्वदृष्ट्या ॥ ५८॥

सत्पुरुषाभिधानं चेत्सदेव सोम्येदमग्र आसीदसद्वा इदमग्र आसीदिति वचनयोः सामरस्यं न स्यात् ॥ ५९॥

शक्तिरेव ह्यव्यक्ताकृतत्वादसदुपचर्येत नाहङ्कर्ता ॥ ६०॥

एतेन देवानां पूर्वस्मिन्युगेऽसतः सदजायतेति निगमो व्याख्यातः ॥ ६१॥

तपो ब्रह्मेति ब्रह्मप्रकरणे साक्षादुपदेशः ॥ ६२॥

ज्ञानात्सृष्टिरिति चेत्सर्वं ज्ञानादुत्पद्येत न बीजान्तरेभ्य इति चेत् ॥ ६३॥

ज्ञानात्सूक्ष्मबीजानि तेभ्यो व्यक्तमिति क्रमादविरोधः ॥ ६४॥

प्रतिव्यक्तसर्गं ज्ञानस्य साहाय्यकं न केवलमादिमे सर्गे ॥ ६५॥

रेतसि वृक्षबीजे वा प्राणः प्रथमं व्यक्तीभवेत् स ततो बीजाणून् वर्धयन्नाकारं हि जनयेत् ॥ ६६॥

प्राणश्चितो दशाविशेषे रूपम् ॥ ६७॥

प्राणं विना केवलैरणुभिर्न जरायुजाण्डजस्वेदजोद्भिज्जजन्म ॥ ६८ ॥

घटादेरस्ति जन्मेति चेत् ॥ ६९ ॥

स जीवस्य सर्गस्तत्र परम्परया शक्तेरुपादानत्वम् ॥ ७० ॥

प्रज्ञाविषयतादात्म्याच्च सर्गो वैज्ञानिकोऽनुमीयते ॥ ७१ ॥

असजातीययोर्हि न तादात्म्यम् ॥ ७२ ॥

यद् ग्रहणे स्मरणे च प्रज्ञा विषयाकारा तत्तयोस्तादात्म्यम् ॥ ७३ ॥

प्रज्ञायां विषयस्य भासो नाम प्रज्ञावृत्तेर्विषयाकारता ॥ ७४ ॥

सान्निध्याद्विषयो ज्ञाने प्रतिबिम्बितः स्यान्न ज्ञानं विषयाकारं भवतीति चेत् ॥ ७५ ॥

असान्निध्ये विषयस्मरणानुपपत्तिः ॥ ७६ ॥

स्वप्नमाययोरितोऽपि स्पष्टोऽयमर्थः ॥ ७७ ॥

नन्वेवं चेत्पुरस्तादेकोऽस्त्यनुभूयतेऽन्यस्तत्तुल्य इति द्वौ विषयौ वक्तव्यौ ॥ ७८ ॥

यद्विषयकं ज्ञानं तदाकारं हि भवति ॥ ७९ ॥

॥ असमाप्तम् ॥

# साम्राज्यनिबन्धनम्

## प्रथमोऽध्यायः

### अधिकरणम् (१)

अथातः साम्राज्यनिबन्धनम् ॥ १॥

प्रभुत्वबन्धकं तत्कृत्याधिकारनियामकं प्रजाधिकारमर्यादाविधायकं साङ्घिकधर्ममर्यादोपदेशकं च शास्त्रं साम्राज्यनिबन्धनम् ॥ २॥

भारतायेदं प्रक्रियते ॥ ३॥

समष्ट्याऽवयवशश्च शास्त्रे निबन्धनसंज्ञा ॥ ४॥

### अधिकरणम् (२)

नरिष्ठा मन्त्रिमण्डली राजकुलं सम्राट् चेति चतुष्पात्परिपालकव्यूहः प्रभुत्वम् ॥ ५॥

अर्हप्रजावर्गाणामर्हप्रतिनिधिभिर्बद्धा सभा नरिष्ठा ॥ ६॥

नरिष्ठात उत्पादितः कार्यनिर्वाहकवर्गो मन्त्रिमण्डली ॥ ७॥

न्यायनिर्वहणेऽन्त्यं निर्णयं दातुं प्रभवित्री सम्राट्पुरःसरा प्राड्विवाकसभा राजकुलम् ॥ ८ ॥

साम्राज्यस्य वंशपरम्पराधिकारवानीश्वरः सम्राट् ॥ ९ ॥

नरिष्टान्तर्भूताया अपि मन्त्रिमण्डल्याः कार्यविशेषादुत्पत्तिविशेषाच्च पृथगपि व्यपदेशः ॥ १० ॥

एवं राजकुलान्तर्गतस्यापि सम्राजः ॥ ११ ॥

## अधिकरणम् (३)

सम्राजो निरपवाद उत्तराधिकारी किरीटी ॥ १२ ॥

अन्यस्य जन्मना स्वीकारेण वा यस्य तत्कालप्राप्त उत्तराधिकारश्चालयितुमशक्यः स निरपवादः ॥ १३ ॥

## अधिकरणम् (४)

राष्ट्रकूटं साम्राज्यमुच्यते ॥ १४ ॥

राष्ट्राणि द्वेधा भारते ॥ १५ ॥

महासंस्थानानि प्रान्ताश्चेति ॥ १६ ॥

वंशपरम्पराऽधिकारवत्पालकं राष्ट्रं महासंस्थानम् ॥ १७ ॥

सम्राडधिकृतपालकं प्रान्तः ॥ १८ ॥

पूर्वः पालको मण्डलेश्वरः ॥ १९ ॥

तस्य निरपवाद उत्तराधिकारी पट्टदेवः ॥ २० ॥

उत्तरः पालकः प्रशासिता ॥ २१ ॥

**अधिकरणम् (५)**

राष्ट्रविभजनकाले पञ्चलक्षानूनप्रजं संस्थानं महत्तदेव राष्ट्री भवितुम् अर्हति ॥ २२ ॥

राष्ट्रीभूतं संस्थानं मण्डलम् ॥ २३ ॥

इतरद्वीरमान्यम् ॥ २४ ॥

वीरमान्यानि प्रान्तेष्वन्तर्भाव्यानि ॥ २५ ॥

वीरमान्यस्य वंशपरम्पराधिकारवान् पतिर्दण्डनायकः ॥ २६ ॥

तस्य निरपवाद उत्तराधिकारी पट्टकुमारः ॥ २७ ॥

**अधिकरणम् (६)**

सम्राट्-किरीटी-मण्डलेश्वर पट्टदेव-दण्डनायक-पट्टकुमारेभ्यो-

ऽन्यसाम्राज्यवासी जनः प्रजा ॥ २८॥

## अधिकरणम् (७)

स्थानानि समवायाश्चेत्यर्हप्रजावर्गपरिच्छेदकानि साम्राज्ये ॥ २९॥

न राष्ट्रयोर्द्वयोरेकं स्थानम् ॥ ३०॥

दशलक्षानधिकप्रजानि स्थानानि कल्पयितव्यानि ॥ ३१॥

पञ्चलक्षानूनप्रजानि सङ्ख्ययेति कनिष्ठो नियमः ॥ ३२॥

स्नातकैः समवायाः ॥ ३३॥

विश्वविद्यालय उत्तमां परीक्षामुत्तीर्णः स्नातकः ॥ ३४॥

एकैकस्मिन्मण्डल एकैकः समवायः ॥ ३५॥

एकैकस्मिन् प्रान्ते द्वौ द्वौ ॥ ३६॥

## अधिकरणम् (८)

कामरूप-वङ्गोत्कलान्ध्र-द्राविड-कर्णाटक-महाराष्ट्र-घूर्जर-सिन्धु-पाञ्चाल-हिन्दुस्थान-विहार-मध्यभारतानि राजधानी च चतुर्दशप्रान्ताः ॥ ३७॥

### अधिकरणम् (९)

प्रान्तेषु पुनः प्रदेशान्विभजेत् ॥ ३८॥

यथा स्थानं प्रायः ॥ ३९॥

तत्स्थानान्तर्गतं वीरमान्यं तत्प्रदेशानुबन्धः ॥ ४०॥

### अधिकरणम् (१०)

अविभाज्यं बहुग्रामं क्षेत्रं महामान्यम् ॥ ४१॥

महामान्यस्य भोक्ता देशमुख्यः ॥ ४२॥

सम्राजो वंशसमष्टिस्वं महामान्यं वंशमान्यम् ॥ ४३॥

वंशमान्ये भागी महाशालः ॥ ४४॥

यजमानो महामण्डलेश्वरः ॥ ४५॥

मण्डलेश्वरवन्न प्रजावर्गे ॥ ४६॥

सम्राट् किरीटिभिन्न आदिसम्राट् वंश्येषु महाशालेषु वृद्धो यजमानः स्यात् ॥ ४७॥

## अधिकरणम् (११)

देशमुख्यः पट्टकुमारो दण्डनायकः पट्टदेवो मण्डलेश्वरो महामण्डलेश्वरः किरीटी सम्राडित्युत्तरोत्तरं गौरववन्तः प्रभवः ॥ ४८ ॥

अष्टैतानि पदानि तत्पत्नीनामपि ॥ ४९ ॥

लक्षणतः पुंयोगाद्वा प्राप्तं नार्याः पदं स्त्रीप्रत्ययान्तं स्यात् ॥ ५० ॥

पत्न्याः पदं न भर्तुः ॥ ५१ ॥

# द्वितीयोऽध्यायः

## अधिकरणम् (१२)

एकैकं स्थानमेकैकं प्रतिनिधिं वृणुयान्निरिष्टायै ॥ १ ॥

समवायश्चैवम् ॥ २ ॥

## अधिकरणम् (१३)

उत्तमर्हत्वं सामवायिकस्य ॥ ३ ॥

प्रभुत्वाय कस्मैचित्पुरपालकसङ्घयवा यत् किञ्चित्करदायी स्थानिकः प्रतिनिधिवरणार्हः स्यात् ॥ ४ ॥

यत्र क्वचिद्विश्वविद्यालये प्रवेशपरीक्षामुत्तीर्णश्च ॥ ५॥

लिङ्गद्वयेन न द्विहस्ततत्त्वम् ॥ ६॥

स्थानसमवाययोरुभयत्राधिकारस्तु न निवार्यते ॥ ७॥

स्थानेष्वनेकत्र करभृदप्येकत्रैव हस्तवान् ॥ ८॥

**अधिकरणम् (१)**

तत्तद्वर्गवरणार्हत्वेन तत्तत्प्रतिनिध्यर्हत्वैकदेशो व्याख्यातः ॥ ९॥

परिशिष्टमर्हत्वं व्यतिरेकतः ॥ १०॥

नाधिकारी वेतनभाक् प्रतिनिधित्वाय तिष्ठेत् ॥ ११॥

अपराधाय न्यायस्थानेन दण्डितो दण्डनभोगकालमध्ये ॥ १२॥

त्र्यनूनैर्वरणार्हैरस्थापितश्च ॥ १३॥

साम्राज्यसाधारणभाषायां भाषितुमशक्तश्च ॥ १४॥

अन्वयतो वै तदर्हत्वम् ॥ १५॥

साम्राज्यसाधारणभाषायां भाषितुं शक्त एव तिष्ठेदिति ॥ १६॥

## अधिकरणम् (१५)

प्रकटयन्नेव स्वं पक्षं तिष्ठेत् ॥ १७॥

परिच्छेदकविशेषं च ॥ १८॥

नैको बहुषु परिच्छेदकेषु ॥ १९॥

न वा द्वयोः ॥ २०॥

## अधिकरणम् (१६)

अधिकसङ्ख्यैर्वृते तत्तद्वर्गवृतप्रत्ययः ॥ २१॥

साम्ये विद्ययाऽधिकः सिध्येत् ॥ २२॥

विद्यासाम्ये वयसा ॥ २३॥

विश्वविद्यालयबिरुदत एव विद्यातारतम्यदर्शनम् ॥ २४॥

## अधिकरणम् (१७)

षष्ठे षष्ठे वर्षे नवा नवा नरिष्टा ॥ २५॥

भूयो वृतो नववत् ॥ २६॥

**अधिकरणम् (१८)**

वरणक्रियाकलापं सर्वं सम्राडेव न्यायनिर्वहणशाखाद्वारा प्रवर्तयेत् ॥ २७॥

तत्सम्बद्धविवादांश्च परिष्कारयेत् ॥ २८॥

स्वयं वा परिष्कुर्यात् ॥ २९॥

**अधिकरणम् (१९)**

नरिष्टा स्ववृतस्वकीयाभ्यामध्यक्षोपाध्यक्षवती स्यात् ॥ ३०॥

पृथगेव तयोर्वरणं न युगपत् ॥ ३१॥

अधिकसङ्ख्यैर्वृते वृतप्रत्ययः ॥ ३२॥

साम्ये निर्णयः प्राग्वत् ॥ ३३॥

नरिष्टाया अध्यक्षः सदसस्पतिः ॥ ३४॥

उपाध्यक्ष उपनेता ॥ ३५॥

**अधिकरणम् (२०)**

अकाले नारिष्टस्य मरणे पुनरन्यस्य तद्वर्गाद्वरणम् ॥ ३६॥

यावत्पूर्वकालं तस्य स्थितिः ॥ ३७॥

मरणेन विसर्जनप्रत्याख्याने व्याख्याते ॥ ३८ ॥

यत्स्वयं विसृजति तद्विसर्जनम् ॥ ३९ ॥

यत्तदर्हं सम्राट् सभातः प्रत्याचष्टे तत्प्रत्याख्यानम् ॥ ४० ॥

प्रत्याख्यानेन तस्यैव शेषकालाय भूयो वरणं विसर्जने त्वप्रतिषेधः ॥ ४१ ॥

विसृज्य पुनरभ्यर्थित्वं कुत इति चेत् ॥ ४२ ॥

अस्ति प्रतिज्ञातादन्यं पक्षमवलम्बमानस्य विसर्जने तदवकाशः ॥ ४३ ॥

यो मध्ये पक्षान्तरमवलम्बेत स सभां विसृजेदिति नियमः ॥ ४४ ॥

अप्रकटनेऽपि पक्षप्रश्नेषु पक्षान्तराय सम्मतिदानं पक्षान्तरावलम्बनवत् ॥ ४५ ॥

## अधिकरणम् (२१)

आदौ सदसस्पतिः सम्राजः पुरो भक्तिप्रमाणं कुर्यात् ॥ ४६ ॥

सम्राजि तद्वंशपरम्पराऽधिकारे निबन्धने च ॥ ४७ ॥

सदसस्पतेः पुर एव तदितरः सर्वो नारिष्टः ॥ ४८ ॥

21 सदसस्पतेर्वरणे नरिष्टां न्यायशास्त्री विनयेत् ॥ ४९ ॥

प्रमाणपूरणादनन्तरमेवोपनेतुर्वरणम् ॥ ५० ॥

### अधिकरणम् (२२)

यथोक्तं भक्तिप्रमाणमकुर्वन्तं सम्राट् सभातः प्रत्याख्यातुं प्रभवेत् ॥ ५१ ॥

सभ्यत्वकाले न्यायस्थानेन दण्डितं च ॥ ५२ ॥

सदसस्पतिनिर्धारितगरिष्ठा सत्प्रवर्तनं च सभायाम् ॥ ५३ ॥

साधारणसत्प्रवर्तनं सभायां यथाऽपराधमितकालपर्यन्तं सदसस्पतिरेव सभातः प्रत्याख्यातुं प्रभवेत् ॥ ५४ ॥

### अधिकरणम् (२३)

सदसस्पतिः सर्वपक्षसमः स्यादिति नियमः ॥ ५५ ॥

तस्य न प्रतिज्ञातपक्षत्यागदोषः ॥ ५६ ॥

उपनेतुरेतद्यावदासनग्रहणकालम् ॥ ५७ ॥

अन्यस्य चोभयोरसन्निधौ तदासनभाजः ॥ ५८ ॥

### अधिकरणम् (२४)

युद्धमध्ये व्यतीतकालाऽपि नरिष्टा न भज्येत ॥ ५९ ॥

सा यावद् युद्धपर्यवसानं वर्तेत ॥ ६० ॥

## तृतीयोऽध्यायः

### अधिकरणम् (२५)

पक्षौ द्वावेव स्यातां देशक्षेमलक्ष्यस्य द्विधैव दर्शनात् ॥ १ ॥

व्यक्तीनां स्वातन्त्र्यं सौख्यं च पालयितव्यमित्येकम् ॥ २ ॥

तत्पक्षस्थान्प्रजा स्वाम्यवादिन आचक्षते ॥ ३ ॥

देशस्य गौरवं भाग्यं च पालयितव्यमित्यपरम् ॥ ४ ॥

तत्पक्षस्थान्देशीयवादिन आचक्षते ॥ ५ ॥

सम्राजः सत्तोभयेषां लक्ष्यस्य च न प्रतिबन्धिका ॥ ६ ॥

प्रजावृतेश्वरवादिनोऽपि देशक्षेमलक्ष्याः सन्तीति चेत् ॥ ७ ॥

न पक्षेश्वरस्य सर्वेश्वरत्वमयुक्तमिति ॥ ८ ॥

अस्तु वरणादनन्तरं पक्षत्यागः सदसस्पतिवदिति चेत् ॥ ९ ॥

न शक्यः सभानिर्वहणकार्यनिर्वहणयोर्व्यत्यासात् ॥ १० ॥

उपरि नियन्तुरभावाच्च ॥११॥

देशैककुटुम्बवादिनोऽपि देशक्षेमलक्ष्याः सन्तीति चेत् ॥१२॥

न व्यक्तिस्वातन्त्र्यापहरणेन सर्वधर्मसूत्रसङ्क्षोभणेन च जीवकलाऽपहारित्वात् ॥१३॥

एकाधिपवादिनोऽपि देशक्षेमलक्ष्याः सन्तीति चेत् ॥१४॥

तत्र पक्षान्तरोपमर्दनदोषो बलीयान् ॥१५॥

तस्माद्द्वावेव पक्षौ हितौ ॥१६॥

यत् किञ्चिद्विशेषदर्शनान्न पक्षान्तरस्थापनमनवस्थानात् ॥१७॥

पक्षबाहुल्ये प्रभुत्वस्य दौर्बल्यापत्तेश्च ॥१८॥

प्रायः सभायामेकपक्षजुषां भूयिष्ठत्वासम्भवात् ॥१९॥

दुर्बले प्रभुत्वे न किञ्चिच्चलेत् ॥२०॥

**अधिकरणम् (२६)**

अधिकारस्थः पक्षः परपक्षानुपमर्देन स्वपक्षलक्ष्यं साधयेत् ॥२१॥

## चतुर्थोऽध्यायः

### अधिकरणम् (२७)

शासनिकं कार्यनिर्वहणं न्यायनिर्वहणं साङ्ग्रामिकं चेति चतस्रः प्रभुत्वकृत्यशाखाः ॥ १ ॥

बहिरङ्गान्तरङ्गकोशादायवाणिज्यविद्याव्यवसायकार्मिकाख्याः पुनरष्टौ शाखाविशेषाः कार्यनिर्वहणशाखायाः ॥ २ ॥

वैदेशिकव्यवहाराः सर्वे बलस्य पोषणमन्यूनाधिकं तत्प्रमाणरक्षणं तदङ्गपरिकरसम्पादनं स्वच्छन्दसैनिकसम्बन्धिकः सर्वे व्यवहाराश्चेति बहिरङ्गशाखा ॥ ३ ॥

शासनधारणमावश्यकनवन्यायशासनालोचनं सिद्धनरिष्टासम्बन्धिनो व्यवहाराः साङ्घिकव्यवहाराः केन्द्ररक्षिजनसम्बन्धिनो व्यवहारा अन्यूनाधिकं न्यायनिर्वहणशाखा प्रमाणरक्षणं तत्पोषणं राष्ट्रसाम्राज्य-प्रभुत्वसम्बन्धपरिशीलनं शाखाष्टकोक्तेभ्यः परिशिष्टाः सर्वे गृह्य-व्यवहाराश्चेत्यन्तरङ्गशाखा ॥ ४ ॥

साम्राज्यस्य कोशः कोशशाखा ॥ ५ ॥

सर्वाणि साम्राज्यस्यादायस्थानानि नाणकधनपत्रनिर्माणं चादायशाखा ॥ ६ ॥

अन्तर्बहिश्च वाणिज्यं वाणिज्यशाखा ॥ ७ ॥

उन्नतविद्या विद्याशाखा ॥८॥

व्यवसायाः सर्वविधाश्च व्यवसायशाखा ॥९॥

परिश्रमाः कार्मिकशाखा ॥१०॥

### अधिकरणम् (२८)

सम्राण्णरिष्टातो बलवत्पक्षनायकं मन्त्रिमण्डलीनिर्माणायाह्वयेत ॥११॥

अङ्गीकृतभारं तं मन्त्रिणमधिकुर्यात्तदभिमतायां कार्यनिर्वहण-शाखायाम् ॥१२॥

स प्रधानी नामान्तरेण ॥१३॥

### अधिकरणम् (२९)

प्रधानी सप्तान्यानङ्गीकृतभारान्नरिष्टात आदाय सम्राजे निवेदयेत् ॥१४॥

तेषां द्रष्टव्यकार्यनिर्वहणशाखाश्च ॥१५॥

सम्राट् तानपि मन्त्रित्वेनाधिकुर्याद्यथा प्रधानिनिवेदनम् ॥१६॥

एवमष्टावेवमन्त्रिणः स्युः ॥१७॥

शाखानामपूर्वो मन्त्री संज्ञायाम् ॥ १८ ॥

प्रधानिनो निजशाखाप्रयुक्ता च संज्ञा ॥ १९ ॥

## अधिकरणम् (३०)

नरिष्टाकालेन प्रायो मन्त्रिमण्डलीकालश्च व्याख्यातः ॥ २० ॥

नरिष्टा तदन्त्यसमावेशे पूर्णे नव नरिष्टोदयात्प्रागेव भज्येत ॥ २१ ॥

नवमन्त्रिमण्डल्युदयादनन्तरं पूर्वा मन्त्रिमण्डलीति विशेषः ॥ २२ ॥

## अधिकरणम् (३१)

अकाले द्वितीयादेर्मन्त्रिणो मरणादौ पुनरन्यस्य प्राग्वदधिकरणम् ॥ २३ ॥

प्रधानिन पुनरन्यस्या एव मन्त्रिमण्डल्याः ॥ २४ ॥

भूयोऽधिकृतोऽन्यवत् ॥ २५ ॥

# पञ्चमोऽध्यायः

## अधिकरणम् (३२)

राजकुले प्राड्विवाका अर्हन्तो न्यायमूर्तयश्चेति द्वेधा स्युः ॥ १ ॥

अवेतनभृतोऽर्हन्तः ॥ २॥

वेतनभृतो न्यायमूर्तयः ॥ ३॥

अधिकरणम् (३३)

सम्राट् स्वयमालोच्य न्यायशास्त्रविदः सतो न्यायमूर्तीनधिकुर्यात् ॥ ४॥

अन्यतमो मुख्यन्यायमूर्तित्वेनाधिकर्तव्यः ॥ ५॥

भूतपुर्वान्न्यायमूर्तीनर्हतः प्रकटयेत्सम्राडच्यदि तत्पूर्वसेवायां विश्वासः ॥ ६॥

न्यायशास्त्रविदो महाशालान् ॥ ७॥

प्रभुबिरुदवतश्च तादृशान् ॥ ८॥

इतरांश्च येषां तद्वेत्तृत्वं विशिष्टं मन्यते ॥ ९॥

अधिकरणम् (३४)

चतुर्भिर्न्यायमूर्तिभिर्बद्धमासनं धर्मासनम् ॥ १०॥

तद्राजकुलस्य पूर्वार्धम् ॥ ११॥

सम्राड्दशमैरर्हद्भिर्न्यायमूर्तिभिश्च बद्धं राजधर्मासनम् ॥ १२॥

तद्राजकुलस्योत्तरार्धम् ॥ १३ ॥

## अधिकरणम् (३५)

पूर्वार्धेन परिष्कृते विषये पुनः परिशोधनायोत्तरार्धं गन्तुमभ्यनुज्ञां दातुमदातुं वा शक्तमासनं राजकुले सन्ध्यासनम् ॥ १४ ॥

तत्सम्राजैकेन बद्धं स्यात् ॥ १५ ॥

# षष्ठोऽध्यायः

## अधिकरणम् (३६)

सन्धये सख्याय च साम्प्रतिकपालकराजवंशादेव सम्राजं वृणुयुः ॥ १ ॥

यदि सन्धिं नाङ्गीकुर्युर्य आपद उद्धरेद्बद्धान्मोचयेत्स सम्राट् कर्तव्यः ॥ २ ॥

## अधिकरणम् (३७)

प्रथमः सम्राडादिराज उच्यते ॥ ३ ॥

ततः सम्राट्त्वं तद्वंशपरम्परामनुधावेद्यथा वक्ष्यामः ॥ ४ ॥

## अधिकरणम् (३८)

औरसः पौनर्भवः सहोढः कानीनः पुत्रिका कृत्रिमश्चेति षडर्हाण्यपत्यानि ॥५॥

अनन्यपूर्वायां परिणययोग्यायां विधिवदूढायां भार्यायामुत्पादितः पुमानौरसो जनयितुः ॥६॥

अन्यपूर्वायां पौनर्भवः ॥७॥

अनन्यपूर्वायां परिणयात्प्रागगर्भ आहितः सहोढो गर्भाधात्रैव सा गर्भिणी यदि परिणीयते ॥८॥

कानीनः प्रसूता यदि परिणीयते ॥९॥

अस्यां यो जायते पुत्रः स मे वंशकरो भवेदिति समयेनापुत्रेण पित्रा वराय प्रतिपादिता दुहितापुत्रिका ॥१०॥

पुत्रिकायाः पुत्रो ज्येष्ठो मातामहस्य पौत्रो वंशकरः स्यात् ॥११॥

स मातामहगोत्रेण गोत्री ॥१२॥

अपुत्राय याचमानाय पितृभ्यामन्यतराभावे शेषव्यक्त्या वा दत्तो होमपूर्वकं स्वीकृतः स्वीकर्तुर्दत्तो नामकृत्रिमः पुत्रः ॥१३॥

न वा होमो भ्रातृपुत्रस्य स्वीकरणे ॥१४॥

अधिकरणम् (३९)

ज्येष्ठस्य पुत्रस्य न दानम् ॥ १५॥

एकस्य दृश्यमानस्य ॥ १६॥

उपनीतस्य च ॥ १७॥

तुल्यान्तरस्य ज्ञातेर्न ग्रहणम् ॥ १८॥

ऊनान्तरस्य च ॥ १९॥

दौहित्रभागिनेययोरपीत्येके ॥ २०॥

न निषेध इति वासिष्ठः ॥ २१॥

दुहितृभगिन्योर्भार्यात्वभावनापत्तिरिति चेत् ॥ २२॥

कृत्रिमस्य माता भार्यात्वेन भावनीयेति न क्वापि शास्त्रम् ॥ २३॥

न च युक्तिः ॥ २४॥

भार्यावद्बन्धुत्वं प्रसज्येतेति चेत् ॥ २५॥

भ्रातृपत्न्यां च स दोषः ॥ २६॥

सामान्यतः परपत्न्यां च ॥ २७॥

**अधिकरणम् (४०)**

सगोत्रः स्वीकर्तव्य इति सर्वसाधारणो नियमः ॥ २८॥

असगोत्रो वा ज्ञातपरम्परैककूटस्थः ॥ २९॥

**अधिकरणम् (४१)**

महाशालेन ज्ञातपरम्परादिराजकूटस्थ एव स्वीकार्य इति नियमः ॥ ३०॥

**अधिकरणम् (४२)**

स्वीकारप्रकरणे तदनुज्ञाता तत्पत्नी तद्वत् ॥ ३१॥

तत्सन्निहिततमज्ञात्यनुज्ञाता च ॥ ३२॥

**अधिकरणम् (४३)**

एकवंश्यानां यावत्परम्पराज्ञानं ज्ञातित्वं ॥ ३३॥

आसप्तपूरुषं ज्ञातयः परस्परं सपिण्डाश्च ॥ ३४॥

अज्ञातयः केवलं सपिण्डाः ॥ ३५॥

अष्टमादयो ज्ञातयः सोदकाः ॥ ३६॥

## सप्तमोऽध्यायः

### अधिकरणम् (४४)

सर्वस्य सम्राजोऽनन्तरं तस्य ज्येष्ठः पुत्रः सम्राट् स्यात् ॥ १॥

अपुत्रे ज्येष्ठे पुत्रे मृते तदनन्तरः पुत्रो ज्येष्ठः स्यात् ॥ २॥

ज्येष्ठीभूते चैवम् ॥ ३॥

औरसादयः पूर्वपूर्वमुत्कर्षात्कनीयांसोऽप्युत्तरेभ्यो ज्येष्ठवत् ॥ ४॥

सपुत्रे ज्येष्ठे पुत्रे मृते तस्य ज्येष्ठः पुत्र उत्तराधिकारी स्यात् ॥ ५॥

परम्परायाः पौत्रप्लुतिसन्दर्भेण तदुत्तरप्लुतिसन्दर्भश्च व्याख्यातः ॥ ६॥

पुत्रिकापुत्रवदिहोत्तराधिकारिचर्चायाम् ॥ ७॥

### अधिकरणम् (४५)

अपुत्रस्य सम्राजोऽनन्तरं तस्य सन्निहितो महाशालः सम्राट् स्यात् ॥ ८॥

पुत्रिकाया अनन्तरं तु पुत्रिकापुत्रस्य तत्पुंसन्ततेर्वाऽप्यभावे पुत्रिकापितुः सन्निहितो महाशालः ॥ ९॥

अनन्तरभ्रातृपुत्रादिस्तदनन्तरभ्रात्रादेः सन्निहित इहोत्तराधिकारिचर्चायाम् ॥ १०॥

## अधिकरणम् (४६)

पुत्रिकापुत्रेषु ज्यायानेव मातामहस्य वंशकरः पौत्रः स्यादिति नियमः ॥ ११॥

तथापि पूर्वपूर्वस्यापद्युत्तरोत्तरः पौत्रायते ॥ १२॥

आपच्च निष्पुत्रसन्ततेर्मरणं प्रवज्या वा ॥ १३॥

## अधिकरणम् (४७)

अपुत्रस्य सम्राजो ज्ञात्यभावे ज्येष्ठा दुहितोत्तराधिकारिणी स्यात् ॥ १४॥

दुहित्रभावे तत्सन्निहितादिराजवंश्यनारी ॥ १५॥

अनन्तरसन्निहितनारी पुत्रादिस्तदनन्तरनार्यादिः सन्निहित इहोत्तराधिकारीचर्चायाम् ॥ १६॥

सन्निहितत्वं चात्र जन्मतो न ज्ञातित्वात् ॥ १७॥

पुत्राणां ज्येष्ठीभावेन दुहितॄणां ज्येष्ठीभावो व्याख्यातः ॥ १८॥

## अधिकरणम् (४८)

वंशान्तरकर्त्र्यादि राजवत् ॥ १९॥

एतेन तद्वंश्यानां महाशालत्ववंशमान्यभागित्वे व्याख्याते ॥ २०॥

उभयसङ्कर्षण आतिदेशिकी मुख्योत्तराधिकारिनिर्णये सन्निकर्षात् ॥ २१ ॥

## अधिकरणम् (४९)

द्वितीयवंशसम्भवेन तृतीयादि वंशाधिकारसम्भवाश्च व्याख्याताः ॥ २२ ॥

## अधिकरणम् (५)

आदिराजवंश्यानां स्त्रीणां पुंस्त्रीपरम्परासु कृत्रिमावधिरादि- राजवंशपरम्परा सकृत्रिमश्चेन्नादिराजकूटस्थः ॥ २३ ॥

द्वितीयादिवंशकूटस्थप्रसङ्गेष्वपि प्रथम आदिराज एव मूलपुरुषत्वेन ग्राह्यः ॥ २४ ॥

तत्सन्ततिपरम्परां पुरुषेभ्यो नारीभ्यश्च प्रवर्तमानां राजकुलं रक्षेत् ॥ २५ ॥

सा यदवधिरुक्ता तत्परम्परां न तत्र यो योजयेत् ॥ २६ ॥

# अष्टमोऽध्यायः

## अधिकरणम् (५१)

सम्राजः प्रेतशरीरे स्थित एव राजकुलं किरीटिनं सम्राजं प्रकटयेत् ॥ १ ॥

तदभावे यथोक्तमुत्तराधिकारिणं निर्णीय सद्यः ॥ २ ॥

न्यायशास्त्री महामण्डलेश्वरोऽर्हश्चान्यो मुख्यन्यायमूर्तिश्चेति तन्निर्णायकं धर्मासनम् ॥ ३॥

तस्य बन्धको न्यायशास्त्री ॥ ४॥

किरीटिनः सम्राट्त्वप्रकटनाय मुख्यन्यायमूर्तिरेक एवालम् ॥ ५॥

### अधिकरणम् (५२)

सम्राज्ञी पुत्ररहितेन पत्याऽनुज्ञाता चेत्पुत्रस्वीकरणाय ॥ ६॥

पत्युः प्रेतशरीरे स्थित एव न्यायशास्त्रिमहामण्डलेश्वरयोः सन्निधौ पुत्रं स्वीकुर्यात् ॥ ७॥

अनन्तरं ताभ्यां ज्ञातार्थो मुख्यन्यायमूर्तिस्तं सम्राजं प्रकटयेत् ॥ ८॥

सम्राजः प्रकटनादनन्तरं शरीरं संस्करणाय निर्हरेयुः ॥ ९॥

### अधिकरणम् (५३)

पुत्रस्वीकरणायेव पुत्रिकाकरणायापि सम्राट्पत्नीमनुज्ञातुं प्रभवेत् ॥ १०॥

सद्यः पुत्रस्वीकरणेन सद्यः पुत्रिकाकरणं व्याख्यातम् ॥ ११॥

आपदि विवाहात्प्रागपि पुत्रिकाकरणमविप्रतिषिद्धम् ॥ १२॥

## अधिकरणम् (५४)

पत्न्याः सद्यः पुत्रस्वीकरणसद्यः पुत्रिकाकरणाभ्यां विपदि जीवतः सम्राजः सद्यः पुत्रस्वीकरणपुत्रिकाकरणे व्याख्याते ॥ १३ ॥

## अधिकरणम् (५५)

सन्निहिततमो ज्ञातिः पुत्र स्वीकरणायैवानुज्ञांदातुं प्रभवेन्न पुत्रिका-करणाय ॥ १४ ॥

## अधिकरणम् (५६)

अनुज्ञाताया अपि कालात्यये स्वीकरणं करणं च न सिंहासन-लाभाय ॥ १५ ॥

स्वर्गिणो वंशाय तु भवन्न निवार्यते ॥ १६ ॥

# नवमोऽध्यायः

## अधिकरणम् (५७)

अप्रौढे सम्राजि तस्य जननी संरक्षिका स्यात् ॥ १ ॥

तदभावे प्रौढा भगिनी ॥ २ ॥

तदनेकत्वे ज्येष्ठा ॥ ३॥

तदभावे महाशालवर्गवृतो महाशालः ॥ ४॥

### अधिकरणम् (५८)

संरक्षकः सम्राड्वद् व्यवहारेषु ॥ ५॥

न निबन्धनसंस्कारकं शासनं कर्तुम् ॥ ६॥

### अधिकरणम् (५९)

सम्राजः प्रतिनिधी राजप्रतिनिधिरुच्यते ॥ ७॥

तस्याधिकारः संरक्षकेण व्याख्यातः ॥ ८॥

उभयदा राजप्रतिनिधेरवसरः ॥ ९॥

नित्यं सम्राजि विदेशस्थे यथा साम्प्रतम् ॥ १०॥

कार्यवशाद्विदेशं गते ॥ ११॥

सम्राडेव स्वस्य प्रतिनिधिं नियुञ्ज्यात् ॥ १२॥

यदि विदेशीयाः सम्राडधिकारमात्रमात्मनरपतेः संरक्षन्तः पूर्णं स्वातन्त्र्यमस्मभ्यं दद्युः सोऽप्येकः सन्धिमार्गः ॥ १३॥

## दशमोऽध्यायः

### अधिकरणम् (६)

शासनिके सन्धिविग्रहनिर्णये च नरिष्टा मन्त्रिमण्डली सम्राट् चेत्यधिकारिणो यथा वक्ष्यामः ॥ १॥

कोशविभागे नरिष्टा मन्त्रिमण्डली चेत्यधिकारिण्यौ ॥ २॥

परिशिष्टे कार्यनिर्वहणे मन्त्रिमण्डली ॥ ३॥

न्यायनिर्वहणे राजकुलम् ॥ ४॥

साङ्ग्रामिके सम्राट् ॥ ५॥

बलोत्पादनं बलशिक्षणं रणेषु बलप्रणयनं चेति साङ्ग्रामिकम् ॥ ६॥

### अधिकरणम् (६१)

राज्ञश्चत्वारः कार्यदर्शिनो भवन्ति ॥ ७॥

शासनिकसन्धिविग्रहेष्वमात्यो नामतः ॥ ८॥

न्यायनिर्वहणे न्यायशास्त्री ॥ ९॥

साङ्ग्रामिके सेनापतिः ॥ १०॥

अन्तरङ्गकृत्येष्वहिभयपरिशोधने च सचिवः ॥ ११॥

### अधिकरणम् (६२)

प्रधानिसूचितमनारिष्टं सम्राडमात्यमधिकुर्यात् ॥ १२॥

मन्त्रिमण्डली कालेन तस्य कालो व्याख्यातः ॥ १३॥

सैनिकाधिकारिभ्यः सेनापतिम् ॥ १४॥

अर्हद्भ्यो न्यायशास्त्रिणम् ॥ १५॥

नयविद्भ्यः सचिवम् ॥ १६॥

तेषां कालो यावत्सम्राडिच्छम् ॥ १७॥

## एकादशोऽध्यायः

### अधिकरणम् (६३)

तत्तच्छाखामन्त्रिणा समानीतं विधानं नरिष्टोपसङ्घेन ततो नरिष्टया च शोधितं सम्राजा चाङ्गीकृतं शासनं भवेत्साम्राज्ये ॥ १॥

साधारणनारिष्टेन च ॥ २॥

मन्त्रिमण्डलीं सदसस्पतिं च विनाऽन्यो नरिष्टासभ्यः साधारणनारिष्टः ॥ ३ ॥

संस्करणं शोधनपदार्थः ॥ ४ ॥

सर्वथाऽनवद्यं चेत्तद्रूपेणाङ्गीकरणं वा ॥ ५ ॥

उपसङ्घे नरिष्टायां चार्धाधिकाङ्गीकृते तदङ्गीकृतप्रत्ययः ॥ ६ ॥

तुल्यत्व एवासनपतेः सम्मतिदानाधिकारः ॥ ७ ॥

विधानशोधकोपसङ्घो नरिष्टायां विधानप्रवेशाभ्यनुज्ञानादनन्तरं तत्कालबद्धः स्यात् ॥ ८ ॥

## अधिकरणम् (६४)

शासनं कालासहं चेदुपसङ्घनिरपेक्षं प्रथमं नरिष्टायामेव तच्छोधनम् अप्रतिषिद्धम् ॥ ९ ॥

कालासहत्वनिर्णये सदसस्पतिः प्रमाणम् ॥ १० ॥

स प्रतिवादं श्रुत्वा निर्णयं दद्यादनुकूलं प्रतिकूलं वा यथान्याय्यम् ॥ ११ ॥

## अधिकरणम् (६५)

नरिष्टायां सिद्धं विधानं सम्राजं गच्छेत् ॥ १२ ॥

स तद्द्वितृतीयांशोन नारिष्टाङ्गीकृतं शासनं कुर्यान्न वा ॥१३॥

कुर्यादेव द्वितृतीयांशानूननारिष्टाङ्गीकृतम् ॥१४॥

अन्यत्र यत्किञ्चित्सङ्घस्वत्वप्रतिरोधकं यत्किञ्चिन्मतसंस्था-विषयाभ्याम् ॥१५॥

निबन्धनसंस्करणनिबन्धनशेषकरणाभ्यां च ॥१६॥

तेषु सम्राजः प्रत्याख्यानाधिकारोऽनवधिः ॥१७॥

**अधिकरणम् (६६)**

निबन्धनवच्छासननिबन्धनशेषयोरपि समष्ट्याऽवयवशश्च संज्ञा ॥१८॥

पूर्वपूर्वं शासनं संस्कर्तुं प्रभवेदुत्तरोत्तरम् ॥१९॥

निबन्धनशेषश्चैवम् ॥२०॥

**अधिकरणम् (६७)**

पादादप्यूना नरिष्टास्यादसमर्था ॥२१॥

सा न किञ्चित्कार्यं कर्तुं प्रभवेत् ॥२२॥

अधिकरणम् (६८)

सन्निहितसभ्यापेक्षयैव द्वितृतीयांशाधिकनिर्णयो नरिष्टायाम् ॥ २३ ॥

तटस्थोऽसन्निहितवत् ॥ २४ ॥

आसनपतिश्च शास्त्रतो मौनी ॥ २५ ॥

अधिकरणम् (६९)

उभयपक्षसाधारणेषु विषयेषु नारिष्टस्य स्वातन्त्र्यं सम्मतिदाने ॥ २६ ॥

पक्षप्रश्नेषु यथापक्षाशयम् ॥ २७ ॥

अधिकरणम् (७०)

मन्त्रिमण्डल्यामविश्वासमुपपादयितुं च नरिष्टा प्रभवेत् ॥ २८ ॥

मन्त्रिमण्डली हि नरिष्टायै बाध्या ॥ २९ ॥

अन्यतमस्मिन्नविश्वासो नोपपाद्य इत्येके ॥ ३० ॥

प्रधानिनं विनाऽन्यत्राप्रतिषेध इति वासिष्ठः ॥ ३१ ॥

नचेदन्यतमार्थं नरिष्टा सर्वां मन्त्रिमण्डलीं व्यर्थमुपहन्यात् ॥ ३२ ॥

पुनरधिकरणादिनाटकं तं विनाऽन्येषाम् ॥ ३३ ॥

प्रथममेव तत्कुतो माभूत् ॥ ३४ ॥

अविश्वासे नरिष्टयाऽङ्गीकृते मन्त्रिमण्डली मन्त्री वाऽपसरेत् ॥ ३५ ॥

भूयो नव बन्धः प्राग्वत् ॥ ३६ ॥

**अधिकरणम् (७१)**

कार्यनिर्वहणेषु प्रश्नान्प्रष्टुं साधारणनारिष्टः सर्वः प्रभवेद्यथा सम्प्रदायम् ॥ ३७ ॥

उत्तराणि दातुं तत्तन्मन्त्री बाध्यः ॥ ३८ ॥

## द्वादशोऽध्यायः

**अधिकरणम् (७२)**

मन्त्रिमण्डल्याममन्त्र्यप्यमात्यः सभ्यः स्यात् ॥ १ ॥

स एव तत्राध्यक्षो भवति ॥ २ ॥

अनुकूलोऽथवा प्रतिकूलो न स्यात्प्रतिपादनस्य ॥ ३ ॥

केवलं सभां चालयेत् ॥ ४ ॥

## अधिकरणम् (७३)

सर्वो मन्त्री स्वस्वशाखासम्बद्धं प्रतिपादयेदिति नियमः ॥ ५॥

प्रधानी शाखान्तरसम्बद्धं प्रतिपादयितुमिच्छति चेच्छाखा-मन्त्रिणमनुमान्य तद्द्वारा ॥ ६॥

सर्वं प्रधानिना सह पञ्चानां सम्मतं सिध्येत् ॥ ७॥

अन्येषां सर्वेषां सम्मतमपि प्रधानिनोऽसम्मतं न सिध्येत् ॥ ८॥

स हि पक्षनीतिधरः ॥ ९॥

## अधिकरणम् (७४)

निबन्धनशासनाविरोधेन कार्यनिर्वहणम् ॥ १०॥

## अधिकरणम् (७५)

मन्त्रिमण्डल्यां चर्चया रहस्यया भवितव्यम् ॥ ११॥

सर्वानुकूलस्येव फलितस्य बहिराविष्करणम् ॥ १२॥

## अधिकरणम् (७६)

विग्रहमावश्यकं मन्त्रिमण्डल्यां सिद्धं बहिरङ्गमन्त्री नरिष्टायै

निवेदयेत् ॥ १३ ॥

स नरिष्टया सम्राजा चाङ्गीकृतः सिध्येत् ॥ १४ ॥

प्रत्याख्यानाधिकारस्तु सम्राजोऽत्रानवधिः ॥ १५ ॥

तस्मादमात्यद्वारा सम्राज आशयं प्रथमं विज्ञायैव सभायां विग्रहोपन्यासः कर्तव्यः ॥ १६ ॥

अन्यथाऽनावश्यककोलाहलः स्यात् ॥ १७ ॥

**अधिकरणम् (७७)**

विग्रहेण सन्धिर्व्याख्यातः ॥ १८ ॥

मध्ये दूतकार्यकलापो विशेषः ॥ १९ ॥

अत्र साधारणशासनवत्सम्राजः प्रत्याख्यानाधिकारस्येयत्ता ॥ २० ॥

सिद्धाः सन्धयः पक्षाभ्यां द्वाभ्यामपि तुल्यं समादर्तव्याः ॥ २१ ॥

**अधिकरणम् (७८)**

प्रतिवर्षं कोशविभागं कोशमन्त्री नरिष्टायै निवेदयेत् ॥ २२ ॥

अनन्तरं तत्तच्छाखामन्त्री स्व स्वविषयानुसारेण ॥ २३ ॥

अकाले च कोशाद्धनप्रार्थनं कालासहसन्दर्भेषु ॥ २४ ॥

तदेतत्सर्वं नरिष्टया शोधितं सिध्येत् ॥ २५ ॥

## त्रयोदशोऽध्यायः

### अधिकरणम् (७९)

प्रजानां साधारणमधिकारं शासनेनापहर्तुं नरिष्टा न प्रभवेत् ॥ १ ॥

कस्यापि प्रभोर्वंशपरम्पराधिकारम् ॥ २ ॥

आदितो निबन्धनेन दत्तं सम्राजः ॥ ३ ॥

राजकुलस्य च ॥ ४ ॥

### अधिकरणम् (८०)

स्वार्जितं धनं स्वयं भोक्तुं परस्मै वा दातुं सर्वासां प्रजानां सामान्यतोऽधिकारः ॥ ५ ॥

शास्त्रतः प्राप्तं च शास्त्रानुसारेण ॥ ६ ॥

स्वाशयं वक्तुं समवायेषु ॥ ७ ॥

लिखितुं च ॥८॥

यथेष्टं यात्राकर्तुम् ॥९॥

यत्र क्वचित्स्वायत्ते स्थले वसितुम् ॥१०॥

स्वमतदेवालयान्प्रवेष्टुम् ॥११॥

स्वयमर्चकद्वारा वा पूजयितुं च यथादेवालयसम्प्रदायम् ॥१२॥

यथाविधि स्वसम्प्रदायानुसारेण यागान् कर्तुम् ॥१३॥

यथारुचि व्यवसायं कर्तुम् ॥१४॥

वाणिज्यं च ॥१५॥

स्वमतसम्प्रदायानुसारेण यत्किञ्चिद्भोक्तुम् ॥१६॥

पुण्यनदीषु स्नातुं च ॥१७॥

भाषणलेखनेन सम्राड्द्रोहं प्रेरयितुम् ॥१८॥

जात्यन्तरद्वेषं च ॥१९॥

द्रोहश्च तं तद्वंशाधिकारं वाऽपहन्तुं बुद्धिः ॥२०॥

न न्यायनिर्णयं दूषयती ॥ २१॥

व्यक्तिं वा काञ्चित् ॥ २२॥

## चतुर्दशोऽध्यायः

### अधिकरणम् (८१)

राष्ट्रन्यायस्थाननिर्णीतं विषयं पुनः शोधयितुं राजकुलं जितः प्रार्थयते चेत् ॥ १॥

संशयेषु राष्ट्रन्यायस्थानस्य प्रार्थने वा ॥ २॥

राष्ट्रयोर्द्वयोः परस्परविवादांश्च परिष्कर्तुम् ॥ ३॥

स्वाधिकारमुल्लङ्घ्य प्रवर्तमानां नरिष्टां मन्त्रिमण्डलीं वा नियन्तुं च ॥ ४॥

यत्र नरिष्टा न प्रभवेत्तत्र मन्त्रिमण्डल्याश्च न क्रियाधिकारः ॥ ५॥

तदनुचरोल्लङ्घनं नियन्तुं तत्सन्निकृष्टन्यायस्थानस्याधिकारः ॥ ६॥

### अधिकरणम् (८२)

धर्मासने त्रयाणां निर्णयः सिध्येत् ॥ ७॥

साम्ये राष्ट्रन्यायस्थाननिर्णयः ॥ ८ ॥

तदादिनिर्णये सन्ध्यासनं यन्निर्धारयेत् ॥ ९ ॥

**अधिकरणम् (८३)**

राजधर्मासने सप्तानां निर्णयः सिध्येत् ॥ १० ॥

षण्णां च धर्मासने यद्येकः स्वानुकूलः ॥ ११ ॥

सम्राजा सहैवेति ॥ १२ ॥

इदं धर्मासनप्रातिकूल्येन ॥ १३ ॥

असिद्धे प्रातिकूल्ये प्रतिकूलास्तटस्था एव भवेयुरिति नियमः ॥ १४ ॥

षट्सु पञ्चसु वा यथोक्तं धर्मासननिर्णयप्रतिकूलेष्वेव सम्राट् स्वमतं तदनुसारिचेद्दद्यात् ॥ १५ ॥

असिद्धे प्रातिकूल्ये समर्थकवर्गायैव स्वहस्तं दद्यात् ॥ १६ ॥

तस्या व्यक्त्याशयस्य तदा न प्राधान्यम् ॥ १७ ॥

## पञ्चदशोऽध्यायः

### अधिकरणम् (८४)

भूतपूर्वराजधर्मासननिर्णयप्रतिकूले स्वाशये धर्मासनं संशयापनोदनाय नवस्य राजधर्मासनस्य बन्धाय सम्राजं प्रार्थयेत् ॥ १॥

तैश्चार्हद्भिः पञ्चभिरात्मना च तदा सम्राडासनं रचयेत् ॥ २॥

नवसु पञ्चानां निर्णयं सम्राट् समर्थयेत् ॥ ३॥

### अधिकरणम् (८५)

राजकुलस्यान्त्यो निर्णयः प्रमाणं स्यात्सर्वेषु न्यायस्थानेषु व्यवहारसन्देहेषु ॥ ४॥

विप्रतिषेधे परस्य बलीयस्त्वम् ॥ ५॥

### अधिकरणम् (८६)

न शासनविरोधेन न्यायस्थाननिर्णयाः ॥ ६॥

निबन्धनविरोधेन च ॥ ७॥

शासनानि निबन्धनं च भाषासन्देहे तात्पर्यसन्देहे वा विचार्य यथामति व्याख्यातुं न्यायस्थानानि प्रभवेयुः ॥ ८॥

## अधिकरणम् (८७)

दण्डनायकः स्वसंस्थाने न्यायाधिकारी स्यात् ॥ ९॥

स्वयमधिकृतद्वारा वा व्यवहारान्पश्येत् ॥ १०॥

अधिकृतनिर्णीतेषु पुनः शोधनाधिकारो राष्ट्रन्यायस्थानस्य जितश्चेत्प्रार्थयते ॥ ११॥

दण्डनायकनिर्णीतेषु राजकुलस्यैव ॥ १२॥

# षोडशोऽध्यायः

## अधिकरणम् (८८)

साम्राज्ये नरिष्टावद्राष्ट्रेषु प्रशासिन्यः ॥ १॥

सम्राड्वत्प्रशासिता मण्डलेश्वरो वा ॥ २॥

राजकुलवदुन्नतन्यायस्थानम् ॥ ३॥

मन्त्रिमण्डलीवत्कार्यनिर्वाहकवर्गः ॥ ४॥

एवं चतुष्पात्तत्रोपप्रभुत्वम् ॥ ५॥

अधिकरणम् (८९)

एकैक एव स्नातकसमवायः ॥ ६॥

स्थानानि यथा राष्ट्रवैशाल्यं कल्पयितव्यानि ॥ ७॥

वरणार्हताविधयः सर्वाः प्राग्वत् ॥ ८॥

अत्र प्रतिनिध्याय तिष्ठतो देशभाषाज्ञत्वमलमिति विशेषः ॥ ९॥

अधिकरणम् (९०)

सम्राडेव प्रशासितॄन्नियुञ्ज्यात् ॥ १०॥

किरीटिनमेकस्मिन्प्रान्ते ॥ ११॥

षष्ठे षष्ठे नवो नवः प्रशासिता ॥ १२॥

प्रशासितुरुन्नतन्यायस्थानेनासनपदम् ॥ १३॥

तत्र न्यायमूर्तीन्स्तु स एव सूचयेन्नियोजनाय सम्राजे ॥ १४॥

अधिकरणम् (९१)

अन्तरङ्गकोशादायविद्यास्थानिकशाखाः कार्यनिर्वहणे ॥ १५॥

राष्ट्रसाम्राज्यादायस्थानानि यथोचितं विभाज्यानि ॥१६॥

देशभाषाविद्या राष्ट्रस्य ॥१७॥

सर्वसाधारणी साम्राज्यस्य ॥१८॥

### अधिकरणम् (९२)

न न्यायशासनानि कर्तुं प्रशासिनी प्रभवेत् ॥१९॥

धर्मशासनानि च ॥२०॥

प्रशासिन्यां सिद्धं शासनं प्रशासित्रा केवलमङ्गीकृतं न सिध्येत् ॥२१॥

सम्राजोऽङ्गीकारोऽपि तत्रापेक्षितः ॥२२॥

मण्डलेषु नैष विधिः ॥२३॥

## सप्तदशोऽध्यायः

### अधिकरणम् (९३)

अनिर्दिष्टोऽधिकारः साम्राज्यप्रभुत्वस्य ॥१॥

नियन्तुं चापथस्थं राष्ट्रप्रभुत्वम् ॥२॥

राष्ट्रप्रजाश्चापथस्थाः ॥ ३ ॥

## अधिकरणम् (९४)

शास्त्रे पुंलिङ्गमुपलक्षकं स्त्रियाश्च तल्लक्षणायाः ॥ ४ ॥

## अधिकरणम् (९५)

वंशमान्यनिकृष्टादायतोऽर्धं सम्राट् करं प्राप्नुयात् ॥ ५ ॥

शेषे च भागं महाशालत्वाद्यथा स्वांशम् ॥ ६ ॥

सामान्यनिबन्धनरीत्यैव वंशमान्यादायशेषाद्भागान्महाशालाः प्राप्नुयुः ॥ ७ ॥

न व्यक्तिसङ्ख्यानुसारेण ॥ ८ ॥

महामण्डलेश्वरोऽधिकृतवद्वेतनभाक् च ॥ ९ ॥

## अधिकरणम् (९६)

सम्राट्कुमाराणां यथा स्वं महाशालभागाः ॥ १० ॥

सम्राट् प्रासात्कराच्च यथोचितं भागाः ॥ ११ ॥

सम्राट्कुमारशब्देनानूढाः कुमार्यश्च गृह्येरन् ॥ १२ ॥

कीर्तिशेषसम्राट्कुमाराश्च ॥१३॥

तत्राप्यनूढानां कुमारीणामपरित्यागः ॥१४॥

### अधिकरणम् (९७)

सम्राट्कुटुम्बादन्यत्र लक्षाधिको निकृष्टादायो भूस्वामिनां वणिजां च स्वाम्यभिप्रेताय धर्माय विनियोज्यः ॥१५॥

स्वसीमायामेव भूस्वामिनः ॥१६॥

यत्र क्वचिद्वणिजः ॥१७॥

तथा कारयितुं राष्ट्रप्रभुत्वस्यास्त्यधिकारः ॥१८॥

## अष्टादशोऽध्यायः

### अधिकरणम् (९८)

अथ हिन्दुसङ्घमर्यादाः ॥१॥

ब्राह्मणक्षत्रियवैश्यशूद्रनिषादाः पञ्चसङ्घाः ॥२॥

सामान्यतः सर्वे वैदिकाः ॥३॥

यथापूर्वं श्रेष्ठा इत्येके ॥ ४॥

नेति वासिष्ठः ॥ ५॥

तुल्या एव स्युस्तुल्यप्राकृतसर्गत्वात् ॥ ६॥

### अधिकरणम् (९९)

पूर्वेषां त्रयाणामेव वैदिकानि कर्माण्यध्ययनाधिकारश्चेत्येके ॥ ७॥

इतरयोरपीच्छतोरिति वासिष्ठः ॥ ८॥

एवं हि बहूनि मन्त्रलिङ्गानि ॥ ९॥

### अधिकरणम् (१००)

ब्राह्मो गान्धर्वश्चेति द्वौ विवाहौ सर्वेषाम् ॥ १०॥

सहधर्माचरणस्य विवाहादनन्तरं सर्वसाधारणत्वान्न तत्प्रतिज्ञया विवाहभेदः ॥ ११॥

दैवासुरार्षेषु विक्रयदोषादनादरणम् ॥ १२॥

दक्षिणा स्यादृत्विजे दाता ॥ १३॥

दक्षिणा च निष्क्रयो न दानम् ॥ १४॥

आर्षे गोग्रहणं प्रत्यक्षं तन्मूल्यवत् ॥ १५॥

राक्षसस्य बलात्करणत्वादविवाहत्वम् ॥ १६॥

पैशाचस्य प्रतारणत्वात् ॥ १७॥

तस्माद्द्वावेव धर्म्यौ विवाहौ ॥ १८॥

अधिकरणम् (१०१)

पाणिग्रहणादिसमावेशनशेषहोमान्तं कर्मविवाहः ॥ १९॥

तत्र ब्राह्मविधौ दानं पूर्वाङ्गम् ॥ २०॥

गान्धर्वविधौ वरणम् ॥ २१॥

कन्याऽभिमताय दानमिति सर्वोत्तमः पन्थाः पित्रभिमतस्य वरणं वेति ॥ २२॥

ब्राह्मगान्धर्वयोः सङ्कीर्णतापत्तिरिति चेत् ॥ २३॥

इष्टत्वादनापत्तिः ॥ २४॥

कन्यामपृष्ट्वैव दद्यादिति ब्राह्मे न विधिः ॥ २५॥

पितरमननुमान्यैव वृणुयादिति न गान्धर्वे ॥ २६॥

तादृशेषु सन्दर्भेषु प्राधान्येन व्यवहारः ॥ २७॥

कन्यां पृष्ट्वा ददाति चेद्ब्राह्म इति ॥ २८॥

पितरमनुमान्यवृणुते चेद्गान्धर्व इति ॥ २९॥

शुद्धब्राह्मेऽपि कन्याया अनभिमतत्वेन प्रत्यक्षं ज्ञाताय न दानम् ॥ ३०॥

## अधिकरणम् (१०२)

समावेशनमात्रं शुद्धगान्धर्व इत्येके ॥ ३१॥

धर्मप्रजार्थः सङ्कल्पः कन्यादूषणादत्र भेदक इति तेषां दृष्टिः ॥ ३२॥

नेति वासिष्ठः ॥ ३३॥

विवाहस्य संस्कारत्वात् ॥ ३४॥

## अधिकरणम् (१०३)

सवर्णायैव प्रदानम् ॥ ३५॥

गान्धर्वोऽपि सवर्णयोः शस्यते ॥ ३६॥

असवर्णयोरपि गाढानुरागयोर्न दोषाय ॥ ३७॥

तदा पितुर्वर्णमपत्यानि भजेरन् ॥ ३८॥

**अधिकरणम् (१०४)**

न वयसाऽधिकामुद्वहेत् ॥ ३९॥

पुनर्भुवोऽप्रतिषेधः ॥ ४०॥

**अधिकरणम् (१०५)**

विंशतिवर्षाधिकवयसे न दानम् ॥ ४१॥

कन्यायामिच्छन्त्यामदोषः ॥ ४२॥

**अधिकरणम् (१०६)**

न सगोत्रामुद्वहेत् ॥ ४३॥

मातृक्रमां च ॥ ४४॥

सपिण्डेषु यावन्मातृससङ्ख्यलिङ्गसाम्ये मातृससङ्ख्या मातृक्रमा ॥ ४५॥

विमातुर्भगिनी ॥ ४६॥

पितृव्यपत्न्याश्च ॥ ४७॥

पत्नी च पितृसमान्तरज्ञातेः स्वर्गिणः ॥ ४८ ॥

भगिनीक्रमां नोद्वहेत् ॥ ४९ ॥

सपिण्डेषु यावत्पितृयावन्मातृ वा ससङ्ख्यलिङ्गसाम्ये स्वतुल्यान्तरा भगिनीक्रमा ॥ ५० ॥

विमातुर्भागिनेयी ॥ ५१ ॥

पितृव्यपत्न्याश्च ॥ ५२ ॥

भगिन्याः सपत्नी च स्वर्गिणि तद्भर्तरि ॥ ५३ ॥

दुहितृक्रमां नोद्वहेत् ॥ ५४ ॥

सपिण्डेषु यावदात्मससङख्यलिङ्गसाम्ये तुल्यान्तरस्य पुत्री दुहितृ-क्रमा ॥ ५५ ॥

पत्न्याश्च भागिनेयी ॥ ५६ ॥

दुहितुः सपत्नी च स्वर्गिणि तद्भर्तरि ॥ ५७ ॥

अभगिनीक्रमामपि तृतीयस्तृतीयां नोद्वहेदित्येके ॥ ५८ ॥

अप्रतिषेध इति वासिष्ठः ॥ ५९ ॥

मन्त्रलिङ्गबलात्सदाचारदर्शनाच्च ॥ ६०॥

भागिनेय्यप्रतिषिद्धेत्येके ॥ ६१॥

प्रतिषिद्धेत्यन्ये ॥ ६२॥

उत्तरः पक्षः साधुः ॥ ६३॥

पूर्वः पक्षः प्रचारेणैव परिहर्तव्यः ॥ ६४॥

आत्मकूटस्थां सपिण्डां नोद्वहेत् ॥ ६५॥

भ्रातुर्दौहित्रीं च ॥ ६६॥

स्वर्गिणो गुरोः पत्नीम् ॥ ६७॥

पुत्रस्य ॥ ६८॥

भ्रातृव्यस्य च ॥ ६९॥

## एकोनविंशोऽध्यायः

### अधिकरणम् (१०७)

पितुः पित्र्ये रिक्थे तत्पुत्राश्च दायवन्तः संस्थानेभ्योऽन्यत्र ॥ १॥

अन्यतो वा शास्त्रत आयाते ॥ २॥

**अधिकरणम् (१०८)**

अनौरसाः पुत्रा अर्धभागाः ॥ ३॥

औरसाः पितृवदेकैकपूर्णभागाः ॥ ४॥

**अधिकरणम् (१०९)**

पितुः स्वर्गिणो विभक्तस्य प्रागुक्तं रिक्थं पुत्रा यथाभागं विभजेयुरनादिष्टम् ॥ ५॥

आदिष्टस्य यथादेशं सङ्क्रान्तिः ॥ ६॥

अनिच्छत्सु पुत्रेषु विभजन्नन्यथादेशं कर्तुं न शक्नुयात् ॥ ७॥

**अधिकरणम् (११०)**

पितुः स्वर्गिणः स्वार्जितं रिक्थं पुत्रा यथाभागं विभजेयुरनादिष्टम् ॥ ८॥

आदि ष्टस्य यथादेशं सङ्क्रान्तिः ॥ ९॥

पुत्रेभ्यो वृत्तिमप्रकल्प्यान्यथादेशं कर्तुं न शक्नुयात् ॥ १०॥

### अधिकरणम् (१११)

पितुरविभक्तस्य पित्र्यमन्यतो वा शास्त्रत आयातं रिक्थं पुत्रा यथाभागं प्राप्नुयुः ॥ ११ ॥

अविभक्तः पिता प्रागुक्तं रिक्थं अन्यथाऽऽदेष्टुं न प्रभवेत् ॥ १२ ॥

पितृवदविभक्तस्य भ्रातुः स्वर्गिणः ॥ १३ ॥

तत्र जीवनपिताच भागीस्यादिति विशेषः ॥ १४ ॥

### अधिकरणम् (११२)

एकस्यां भार्यायां सपुत्रायां जीवन्त्यां पुनरन्यां चेत्परिगृह्णीयात् ॥ १५ ॥

तस्य तात्कालिकं भागमेव प्रागुक्ते रिक्थे द्वितीयापुत्राः प्राप्नुयुरकृतेऽपि विभागे ॥ १६ ॥

महाशालेषु नैष न विधिः ॥ १७ ॥

### अधिकरणम् (११३)

विभक्तस्य पुत्रस्य कृतदारस्य स्वर्गिणो रिक्थं माता प्राप्नुयात् ॥ १८ ॥

तदभावे पिता ॥ १९ ॥

तयोरभावे भ्रातरः ॥ २० ॥

भ्रात्रभावे भगिन्यः ॥ २१ ॥

तदभावे सन्निहितज्ञातिवर्गः ॥ २२ ॥

तुल्यबन्धुत्वानां समांशत्वद्योतनाय वर्ग इति ॥ २३ ॥

अत्र तद्वत्स्वर्गिणस्तत्पुत्राः ॥ २४ ॥

**अधिकरणम् (११४)**

कृतदारस्य भार्या ॥ २५ ॥

पुनरूढाचेत्ततश्च्युता स्यात् ॥ २६ ॥

अनूढापि यावज्जीवितभोगाय ॥ २७ ॥

न दानाय विक्रयाय वा ॥ २८ ॥

तस्या अनन्तरं दुहितरः ॥ २९ ॥

दुहितॄणामभावे भर्तुर्भ्रातर इत्यादि चालनमतिदेशश्च प्राग्वत् ॥ ३० ॥

**अधिकरणम् (११५)**

प्राप्ते पित्र्ये रिक्थे दुहितरः पुंवत् ॥ ३१॥

**अधिकरणम् (११६)**

भर्तृप्राप्तरिक्थ इव पुत्रप्राप्तरिक्थे स्त्रीणां न दानविक्रयाधिकारः ॥ ३२॥

भक्तिदत्ते त्वस्ति ॥ ३३॥

प्रीतिदत्ते भार्यायाः ॥ ३४॥

**अधिकरणम् (११७)**

स्त्रीधनानि यथासम्प्रदायम् ॥ ३५॥

तत्र स्त्रीणां निरङ्कुशोऽधिकारः ॥ ३६॥

अनन्तरं सर्वेषामपत्यानां तुल्यो दायः ॥ ३७॥

**अधिकरणम् (११८)**

भार्याया अपूर्णाधिकारं रिक्थं तस्या अनन्तरं भर्ता प्राप्नुयात् ॥ ३८॥

तस्यानन्तरं पुत्राः ॥ ३९॥

## अधिकरणम् (११९)

स्वार्जित्ते नारी पुंवत् ॥ ४० ॥

तस्या अनन्तरमनादिष्टं सर्वाण्यपत्यानि तुल्यं प्राप्नुयुरिति विशेषः ॥ ४१ ॥

दुहितॄणां पित्र्यवन्मातुरीदृशमायातम् ॥ ४२ ॥

# विंशोऽध्यायः

## अधिकरणम् (१२०)

सन्न्यासिनो न दायः ॥ १ ॥

मतान्तरं प्रविष्टस्य ॥ २ ॥

मतान्तरनार्युद्वाहो मतान्तरप्रवेशवत् ॥ ३ ॥

## अधिकरणम् (१२१)

नित्यकन्या पुत्रवद्दायहारिणी ॥ ४ ॥

यावज्जीवितं भोगायैव ॥ ५ ॥

तस्या अनन्तरं भ्रातरस्तत्प्राप्नुयुः ॥ ६ ॥

## अधिकरणम् (१२२)

न हन्यान्नरम् ॥ ७॥

न परस्य धनं हरेत् ॥ ८॥

न परदारान् गच्छेत् ॥ ९॥

न सुरां पिबेत् ॥ १०॥

नानृतं ब्रुयात् ॥ ११॥

न परं दूषयेत् ॥ १२॥

न परस्य द्रोहमभिदध्यात् ॥ १३॥

ता एताः सप्तमहामर्यादाः सप्तमहामर्यादाः ॥ १४॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूो-
र्गणपतेः कृतिः साम्राज्यनिबन्धनं समाप्तम् ।

॥ वासिष्ठकाव्यकण्ठगणपतिमुनेः ग्रन्थमाला॥

Vāsiṣṭhakāvyakaṇṭhagaṇapatimuneḥ Granthamālā

# Collected Works of Vasishtha Kavyakantha Ganapati Muni

## Contents of all Volumes

### VOLUME 1

VOLUME 2

## 2. स्तोत्रग्रन्थमाला *stotragranthamālā*
**The Book of Adoration (Part Two)**

| | | |
|---|---|---|
| **2.1.** | देवीस्तोत्रमञ्जरी *devīstotramañjarī* | Verses in praise of Goddess Uma (118 verses) |
| **2.2.** | श्रीत्रिपुरसुन्दरीगीतम् *śrītripurasunda-rīgītam* | Singing praise of Goddess Tripurasundari (18 verses) |
| **2.3.** | अमृताम्बापञ्चरत्नम् *amṛtāmbā-pañcaratnam* | Verses in praise of Amritamba – the consort of Narasimha (5 verses) |
| **2.4.** | सौन्दर्याम्बानिर्वाण-षट्कम् *soundaryāmbā-nirvāṇaṣaṭkam* | Verses on the liberation of Saunda-ryamba – the mother of Sri Ramana Maharshi (6 verses) |
| **2.5.** | रेणुकाषट्कम् *reṇukāṣaṭkam* | Verses on Renuka – the mother of Parasurama (6 verses) |
| **2.6.** | रेणुकासप्तकम् *reṇukāsaptakam* | Verses in praise of Goddess Renuka (7 verses) |
| **2.7.** | इन्द्राणीसप्तशती *indrāṇīsaptaśatī* | Verses in praise of Goddess Indrani – the consort of the Vedic godhead Indra (700 verses) |

| | | |
|---|---|---|
| **2.8.** | प्रचण्डचण्डीत्रिशती<br>*pracaṇḍacaṇḍī-trisatī* | Verses in praise of Chinnamasta – one of the ten cosmic powers of the Divine Mother (300 verses) |
| **2.9.** | मङ्गलगौरीस्तोत्रम्<br>*maṅgalagaurī-stotram* | Benedictory verses in praise of Goddess Gauri (8 verses) |

## VOLUME 3

### 3. स्तोत्रग्रन्थमाला *stotragranthamālā*<br>**The Book of Adoration (Part Three)**

| | | |
|---|---|---|
| **3.1.** | श्रीरमणचत्वारिंशत्<br>*śrīramaṇa-catvāriṁśat* | Verses in praise of Sri Ramana Maharshi (40 verses) |
| **3.2.** | शिवशतकम्<br>*śivaśatakam* | Verses in praise of Shiva (100 verses) |
| **3.3.** | शिवस्तवराजः<br>*śivastavarājaḥ* | Verses in praise of Shiva (72 verses) |
| **3.4.** | शिवसप्ततिनामस्तोत्रम्<br>*śivasaptati-nāmastotram* | Seventy names of Shiva as mentioned in the Veda (8 verses) |
| **3.5.** | इन्द्रसहस्रनामस्तोत्रम्<br>*indrasahasra-nāmastotram* | Verses having one thousand names of Indra as mentioned in the Rigveda (115 verses) |

| | | |
|---|---|---|
| **3.6.** | इन्द्रसहस्रे प्रथमं शतकम् *indrasahasre pathamaṁ śatakam* | Verses in praise of Indra (100 verses) |
| **3.7.** | इन्द्रसहस्रे कटाक्ष-स्तबकः *indrasahasre kaṭākṣastabakaḥ* | Verses extolling the graceful look of Indra (24 verses) |
| **3.8.** | इन्द्रविंशतिः *indraviṁśatiḥ* | Verses in praise of Indra (20 verses) |
| **3.9.** | इन्द्रसप्तकम् *indrasaptakam* | Verses in praise of Indra (7 verses) |
| **3.10.** | पवनाष्टकम् *pavanāṣṭakam* | Verses in praise of Vayu (8 verses) |
| **3.11.** | श्रीनृसिंहपञ्चरत्नम् *śrīnṛsiṁha pañcaratnam* | Verses in praise of Sri Narasimha (5 verses) |
| **3.12.** | श्रीयोगाञ्जनेयपञ्चरत्नम् *śrīyogāñjaneya-pañcaratnam* | Verses in praise of Sri Yoganjaneya (5 verses) |
| **3.13.** | तारकरामनामस्तुतिः *tārakarāma-nāmastutiḥ* | Verses singing the name of Sri Rama (16 verses) |

| | | |
|---|---|---|
| **3.14.** | कृष्णाक्षरमाला<br>*kṛṣṇākṣaramālā* | Verses on Sri Krishna in Sanskrit alphabetical order (50 verses) |
| **3.15.** | रामगीता<br>*rāmagītā* | Verses on Sri Rama (9 verses) |
| **3.16.** | गीतमाला<br>*gītamālā* | Garland of ten songs praising different Vedic and other godheads (225 verses) |
| **3.17.** | शिवगीतम्<br>*śivagītam* | Verses praising Lord Shiva (25 verses) |
| **3.18.** | रमणगीतम्<br>*ramaṇagītam* | Verses praising Sri Ramana Maharshi (4 verses) |

VOLUME 4

## 4. तत्त्वग्रन्थमाला *tattvagranthamālā*
## The Book on Principles of Existence

| | | |
|---|---|---|
| **4.1.** | सदाचारबोधिनी<br>*sadācārabodhinī* | Code of conduct for human beings (81 verses) |
| **4.2.** | तत्त्वघण्टाशतकम्<br>*tattvaghaṇṭā-śatakam* | Verses on the principles of existence composed extempore in one hour as a part of an ashtavadhanam (100 verses) |

| | | |
|---|---|---|
| **4.3.** | *तन्त्रहृदयम्<br>*tantrahṛdayam* | A Tantra treatise on worshipping different aspects of the Divine Mother (192 verses) |
| **4.4.** | अक्षरावलिः<br>*akṣarāvaliḥ* | Verses describing Sanskrit syllables (alphabet) and their corresponding deities (21 verses) |
| **4.5.** | श्रीरमणगीता<br>*śrīramaṇagītā* | Teachings of Sri Ramana Maharshi (303 verses) |
| **4.6.** | सद्दर्शनम्<br>*saddarśanam* | Sanskrit rendering of an original Tamil text "*ulladu narpadu*" of Sri Ramana Maharshi (44 verses) |
| **4.7-9.** | *विश्वमीमांसा<br>*viśvamīmāṁsā* | These three (4.7-9) deal with several spiritual and metaphysical aspects of the principles of existence (679 verses) |
| **4.10.** | *धर्मानुशासनम्<br>*dharmānu-śāsanam* | Verses dealing with the Hindu religious injunctions (39 verses) |

---

* Incomplete writings

VOLUME 5

## 5. सूत्रग्रन्थमाला *sūtragranthamālā*
## The Book of Aphorisms (Part One)

| | | |
|---|---|---|
| **5.1.** | महाविद्यासूत्रम् *mahāvidyāsūtram* | On the ten cosmic powers of the Divine Mother (705 aphorisms) |
| **5.2.** | राजयोगसारसूत्रम् *rājayogasārasūtram* | Essence of Rajayoga (103 aphorisms) |
| **5.3.** | इन्द्रेश्वराभेदसूत्रम् *indreśvarā bhedasūtram* | Proclamation of the non-difference between Indra and Ishwara (37 aphorisms) |
| **5.4.** | चतुर्व्यूहसूत्रम् *caturvyūhasūtram* | Four main aspects of the Indra of the Rigveda (162 aphorisms) |
| **5.5.** | रुद्रकुटुम्बसूत्रम् *rudrakuṭumba sūtram* | Description of the family of Rudra (42 aphorisms) |
| **5.6.** | सृष्टिसूत्रम् *sṛṣṭisūtram* | On Creation (33 aphorisms) |
| **5.7.** | ईश्वरमीमांसा *īśvaramīmāṁsā* | Description of the true nature of Ishwara (65 aphorisms) |
| **5.8.** | क्रियाशक्तिमीमांसा *kriyāśakti-mīmāṁsā* | On the Divine power of action (24 aphorisms) |

| | | |
|---|---|---|
| **5.9.** | सिद्धान्तसारसूत्रम्<br>*siddhāntasāra-sūtram* | The essence of decisive truth principle (42 aphorisms) |
| **5.10.** | मनीषासङ्ग्रहः<br>*manīṣāsaṅgrahaḥ* | A manual of spiritual science (120 aphorisms) |
| **5.11.** | अथ शान्तितपोबोधानां फलनिरूपणम्<br>*athaśāntitapobodhānāṁ phalanirūpaṇam* | Determining the fruits of peace, austerity and knowledge (9 aphorisms) |
| **5.12.** | गायत्रीव्याख्यानम्<br>*gāyatrīvyākhyānam* | Explanation of the Gayatri Mantra of Rishi Vishwamitra (48 aphorisms) |
| **5.13.** | योगव्याख्यानम्<br>*yogavyākhyānam* | On Yoga (48 aphorisms) |
| **5.14.** | सीताव्याख्यानम्<br>*sītāvyākhyānam* | On Sita – the consort of Sri Rama (51 aphorisms) |
| **5.15.** | कृष्णव्याख्यानम्<br>*kṛṣṇavyākhyānam* | On Sri Krishna (75 aphorisms) |
| **5.16.** | तत्त्वसामान्यमीमांसा<br>*tattvasāmānya-mīmāṁsā* | A brief enquiry into the principles of existence (20 aphorisms) |
| **5.17.** | *तत्त्वमीमांसा<br>*tattvamīmāṁsā* | The principles of existence (245 aphorisms) |

| | | |
|---|---|---|
| 5.18. | प्रमाणपरीक्षा<br>*pramāṇaparīkṣā* | Explaining Pramana, a means to attain Prama or a certain Knowledge (50 aphorisms) |
| 5.19. | समवायपरीक्षा<br>*samavāyaparīkṣā* | Explaining Samavaya or the perpetual co-inherence that lies between a substance and its qualities (14 aphorisms) |
| 5.20. | अभावपरीक्षा<br>*abhāvaparīkṣā* | Explaining Abhava or non-existence, one of the six pramanas of the Vedanta philosophy (40 aphorisms) |
| 5.21. | पञ्चजनचर्चा<br>*pañcajanacarcā* | On untouchability (89 aphorisms) |
| 5.22. | गोत्रप्रवरनिर्णयः<br>*gotrapravara-nirṇayaḥ* | Determination of the family sub-divisions (200 aphorisms) |
| 5.23. | विवाहधर्मसूत्रम्<br>*vivāhadharma-sūtram* | On Hindu laws and custom of marriage (151 aphorisms) |
| 5.24. | शब्दप्रमाणचर्चा<br>*śabdapramāṇacarcā* | An enquiry into the authority of Vedas (166 aphorisms) |
| 5.25. | जैमिनीयतर्कवार्तिकम्<br>*jaiminīyatarka-vārtikam* | A new interpretation of the aphorisms of Jaimini (348 aphorisms) |

| | | |
|---|---|---|
| **5.26.** | पञ्चममीमांसा *pañcamamīmāṁsā* | On five kinds of people (130 aphorisms) |
| **5.27.** | दर्शनमाला *darśanamālā* | On Metaphysics (121 aphorisms) |
| **5.28.** | गणपतिदर्शनम् *gaṇapatidarśanam* | Spiritual thoughts of Ganapati Muni (95 aphorisms) |
| **5.29.** | *शक्तिदर्शनम् *śaktidarśanam* | On the dynamic aspect of the Divine (109 aphorisms) |
| **5.30.** | साम्राज्यनिबन्धनम् *sāmrājya nibandhanam* | A new constitution for India (560 aphorisms) |

VOLUME 6

**6.** सूत्रग्रन्थमाला *sūtragranthamālā*
**The Book of Aphorisms (Part Two)**

| | | |
|---|---|---|
| **6.1-16.** | *विश्वमीमांसा *viśvamīmāṁsā* | An encyclopedic work on all aspects of the Hindu religion (1640 aphorisms) |
| **6.17.** | तत्त्वानुशासनसूत्राणि *tattvānuśāsana-sūtrāṇi* | Instructions on the principles of existence (18 aphorisms) |
| **6.18-26** | *धर्मानुशासनम् *dharmānu-śāsanam* | Instructions on Dharma (839 aphorisms) |

| | | |
|---|---|---|
| **6.27-28** | *देवतामीमांसा<br>*devatāmīmāṁsā* | On Vedic deties<br>(162 aphorisms) |
| **6.29.** | *वासिष्ठदर्शनम्<br>*vāsiṣṭhadarśanam* | Doctrine of Ganapati Muni<br>(45 aphorisms) |
| **6.30.** | *सर्वार्थदर्शनम्<br>*sarvārtha-darśanam* | On the doctrine of direct perception (77 aphorisms) |
| **6.31.** | *आदिशास्त्रार्थसूत्रम्<br>*ādiśāstrātha-sūtram* | On the first hymn of the Rigveda (70 aphorisms) |
| **6.32.** | *वासिष्ठकामसूत्राणि<br>*vāsiṣṭhakāma sūtrāṇi* | On sexual love as understood by Ganapati Muni<br>(89 aphorisms) |
| **6.33.** | *महावार्तिकम्<br>*mahāvārtikam* | On the authenticity of Vedic texts (94 aphorisms) |

## VOLUME 7

### 7. भाष्यग्रन्थमाला *bhāṣyagranthamālā*<br>The Book of Commentaries

| | | |
|---|---|---|
| **7.1.** | *मूलग्रन्थप्रशंसा<br>*mūlagrantha-praśaṁsā* | A tribute to Rigveda |

| | | |
|---|---|---|
| **7.2.** | *नूतनभाष्यकरणावसरकथनम्<br>*nūtanabhāṣyakaraṇā-vasarakathanam* | Necessity for a fresh and new interpretation of the Rigveda |
| **7.3-5.** | *ऋग्वेदभाष्यम्<br>*ṛgvedabhāṣyam* | Introduction to a commentary on the Rigveda |
| **7.6.** | *आदिवेदमीमांसा<br>*ādivedamīmāṁsā* | On the Rigveda |
| **7.7.** | *ऋग्वेदविमर्शिनी<br>*ṛgvedavimarśinī* | Rigveda – an introduction |
| **7.8.** | ऋग्वेदमन्त्रभाष्यम्<br>*ṛgvedamantra-bhāṣyam* | Explanation of some of the hymns of the 1st, 2nd and 7th mandala of Rigveda |
| **7.9.** | *विश्वमीमांसा-प्रथमम् अक्षरप्रकरणम्<br>*viśvamīmāṁsā-prathamamakṣara-prakaraṇam* | On word-meaning relationship |
| **7.10.** | *देवताकाण्डे द्वितीयं प्रकरणम्<br>*devatākāṇḍe dvitīyaṁ prakaraṇam* | Second chapter on Vedic godheads |

| | | |
|---|---|---|
| 7.11. | *ऐन्द्रसहस्रनाम-भाष्यम्<br>*aindrasahasra-nāmabhāṣyam* | Commentary on thousand names of Indra |
| 7.12. | जैमिनीयसूत्रभाष्यम्<br>*jaiminīyasūtra-bhāṣyam* | Commentary on the aphorisms of Jaimini |
| 7.13. | ईशोपनिषद्भाष्यम्<br>*īśopaniṣadbhāṣyam* | Commentary on Ishopanishad |
| 7.14. | उपदेशसारभाष्यम्<br>*upadeśasārabhāṣyam* | Commentary on Upadeshasara of Sri Ramana Maharshi |
| 7.15. | गुरुमन्त्रभाष्यम्<br>*gurumantrabhāṣyam* | Commentary on Gurumantra |
| 7.16. | अग्नेः चतस्रो विभूतयः<br>*agneḥ catasro vibhūtayaḥ* | Four emanations of Agni |
| 7.17. | दैवरातदर्शनम् अन्वयभाष्यम्<br>*daivarāta-darśanam anvayabhāṣyam* | A commentary on the doctrine of Daivarata, a disciple of Sri Ganapati Muni |
| 7.18. | *मातृतत्त्वप्रकाशिका<br>*mātṛtattva-prakāśikā* | A Sanskrit rendering of two chapters of Sri Aurobindo's *The Mother* |

| | | |
|---|---|---|
| **7.19.** | *शारीरकमीमांसा टिप्पणी<br>*śārīrakamīmāṁsā-ṭippaṇī* | A note on the *Brahmasutra-bhashya* of Adi Sankara |
| **7.20.** | *वैदिकशब्दानामर्थाः<br>*vaidikaśabdānām arthāḥ* | Meanings of Vedic words |

VOLUME 8

## 8. आयुर्वेदज्योतिषग्रन्थमाला
*āyurvedajyotiṣagranthamālā*
**The Book of Ayurveda and Astrology**

| | | |
|---|---|---|
| **8.1.** | चिकित्सानुशासनम्<br>*cikitsānuśāsanam* | Instructions on medical treatment (384 aphorisms) |
| **8.2.** | प्राणतोषणम्<br>*prāṇatoṣaṇam* | A treatise on the maintenance of a healthy life (108 verses) |
| **8.3.** | होरानिर्णयसङ्ग्रहः<br>*horānirṇaya-saṅgrahaḥ* | A treatise on Astrology (81 verses) |
| **8.4.** | षोडशश्लोकी<br>*ṣoḍaśaślokī* | Merits and demerits of the planetary positions (16 verses) |
| **8.5.** | त्रिभावफलचन्द्रिका<br>*tribhāvaphala-candrikā* | A work on Keraliya Astrology dealing with Ayu – life-span, Kalatra – wife, Putra – son (89 verses) |

| | | |
|---|---|---|
| **8.6.** | गणककण्ठाभरणम् *gaṇakakaṇṭhā-bharaṇam* | On movements of the planets |

VOLUME 9

**9.** *भारतचरित्रमीमांसा *bhāratacaritramīmāṁsā*
**A Treatise on the Mahabharata**

VOLUME 10

**10.** *पूर्णा *pūrṇā*
**Purna – A Novel**

VOLUME 11

**11.** प्रकीर्णकम् *prakīrṇakam*
**Miscellaneous Writings**

| | | |
|---|---|---|
| **11.1.** | गणपतिमुनेः पत्राणि *gaṇapatimuneḥ patrāṇi* | Letters of Ganapati Muni |
| **11.2.** | नवद्वीप-काव्यकण्ठः *navadvīpa-kāvya-kaṇṭhaḥ* | Ganapati Muni recieving 'Kavyakantha' title |
| **11.3.** | प्रास्ताविकपद्यानि *prāstāvikapadyāni* | Collection of stray verses |

| | | |
|---|---|---|
| **11.4.** | सुकन्यादस्रसंवादः<br>*sukanyādasra-saṁvādaḥ* | Dialogue between Sukanya and Ashwinideva from Mahabharata |
| **11.5.** | पाण्डवधार्तराष्ट्रसम्भवः<br>*pāṇḍavadhārta-rāṣṭrasaṁbhavaḥ* | Extempore verses on the origin of the Pandavas and Kauravas |
| **11.6.** | *भृगुवंश इतिहासः<br>*bhṛguvaṁśa itihāsaḥ* | History of Bhrigu lineage |
| **11.7.** | लालिभाषोपदेशः<br>*lalibhāṣopadeśaḥ* | A proposed new language |
| **11.8.** | इतरग्रन्थाः<br>*itaragranthāḥ* | Other texts |

VOLUME 12

**12.** **अनुक्रमणी** *anukramaṇī*
**Index**

"Vasishtha Ganapati Muni (1878-1936) was a luminary of the first magnitude on the spiritual firmament of modern India. He was a versatile genius whose contribution in the many fields to which he turned his attention are yet to be fully assessed." **Sri M.P. Pandit, *Adoration of the Divine Mother*.**

"Kavyakantha Ganapati Sastri, .... played much the same role in the life and reputation of Bhagavan Sri Ramana Maharshi as Swami Vivekananda did in that of Sri Ramakrishna Paramahamsa. Sri Vasishtha Muni was a mighty spiritual personality in his own right,.... he recognized the uniqueness of Bhagavan's teaching, accepted him as his *guru* and proclaimed him as the Maharshi to the whole world. Those who want to understand the message of the Maharshi in its pristine purity have to study the Muni's redaction of the Master's teachings ..." **Sri S. Shankaranarayanan, *Bhavan's Journal*.**

॥ वासिष्ठकाव्यकण्ठगणपतिमुनेः ग्रन्थमाला ॥

Collected Works of Vasishtha Kavyakantha Ganapati Muni

| | |
|---|---|
| VOLUME 1 | स्तोत्रग्रन्थमाला *stotragranthamālā*<br>The Book of Adoration (Part One) |
| VOLUME 2 | स्तोत्रग्रन्थमाला *stotragranthamālā*<br>The Book of Adoration (Part Two) |
| VOLUME 3 | स्तोत्रग्रन्थमाला *stotragranthamālā*<br>The Book of Adoration (Part Three) |
| VOLUME 4 | तत्त्वग्रन्थमाला *tattvagranthamālā*<br>The Book on the Principles of Existence |
| **VOLUME 5** | **सूत्रग्रन्थमाला *sūtragranthamālā***<br>**The Book of Aphorisms (Part One)** |
| VOLUME 6 | सूत्रग्रन्थमाला *sūtragranthamālā*<br>The Book of Aphorisms (Part Two) |
| VOLUME 7 | भाष्यग्रन्थमाला *bhāṣyagranthamālā*<br>The Book of Commentaries |
| VOLUME 8 | आयुर्वेदज्योतिषग्रन्थमाला *āyurvedajyotiṣagranthamālā*<br>The Book of Ayurveda and Astrology |
| VOLUME 9 | भारतचरित्रमीमांसा *bhāratacaritramīmāṁsā*<br>A Treatise on the Mahabharata |
| VOLUME 10 | पूर्णा *pūrṇā*<br>Purna - A Novel |
| VOLUME 11 | प्रकीर्णकम् *prakīrṇakam*<br>Miscellaneous Writings |
| VOLUME 12 | अनुक्रमणी *anukramaṇī*<br>Index |